विरूपयितुं समर्थः । शृण्वन्तु मे लोकपालाः । यथाहं कौमारं भर्तारं मुक्त्वा नान्यं परपुरुषं मनसापि वेद्मि । तथा ममानेन सत्येनाव्यङ्गं मुखमस्त्विति । अथासौ मूर्खः कृतकवचनव्यामोहितचित्तः प्रज्वाल्योल्कामव्यङ्गमुखीं जायां दृष्ट्वा प्रोत्फुल्लनयनः परिचुम्ब्य हृष्टमना बन्धनादवमुच्य पीडितं च परिष्वज्य शय्यामारोपितवान् । परिव्राजकस्त्वादित एवारभ्य यथावृत्तमर्थमभिज्ञातवान् ।

दूतिकापि हस्तकृतनासापुटा स्वगृहं गत्वाचिन्तयत् । किमधुना कर्तव्यमिति । अथ तस्या भर्ता नापितो राजकुलात्प्रत्यूषस्यागत्य तां भार्यामाह । समर्पय । भद्रे । क्षुरभाण्डम् । राजकुले कर्म कर्तव्यमिति । सा च दुष्टाभ्यन्तरस्थैव क्षुरमेव प्राहिणोत् । स च समस्तक्षुरभाण्डासमर्पणात्क्रोधाविष्टचित्तो नापितस्तमेव तस्याः क्षुरं प्रतीपं प्राहिणोत् । अथासावार्तरवमुच्चैः कृत्वा पाणिना नासापुटं प्रमृज्यासृक्पातसमेतां नासिकां क्षितौ प्रक्षिप्याब्रवीत् । परित्रायध्वम् । परित्रायध्वम् । अनेनाहमदृष्टदोषा विरूपितेति । तथाभ्यागतै राजपुरुषैः प्रत्यक्षदर्शनां तां दृष्ट्वा विरूपां कीलपार्ष्णिलगुडैरतीव हतः पश्चाद्गाढबन्धश्च तया सह धर्मस्थानमुपनीतो नापितः । पृच्छ्यमानश्चाधिकृतैः किमिदं महद्विशसनं स्वदारेषु त्वाय कृतमिति यदा बहुश उच्यमानो नोत्तरं प्रयच्छति । तदा धर्माधिकृताः शूले ऽवतंस्यतामित्याज्ञापितवन्तः । निष्पापं च परिव्राट्छूलस्थानं नीयमानं नापितं दृष्ट्वा सत्त्वानुकम्पया चोपलब्धतत्त्वार्थो ऽधिकरणमुपगम्य धर्मस्थानाधिकृतानब्रवीत् । नार्हथैनमदोषकर्तारं नापितं शूले समारोपयितुम् । यत्कारणम् । इदमाश्चर्यत्रयं श्रूयताम् ।

जम्बुको ऽडुयुद्धेन वयं चाषाढभूतिना ।
दूतिका तन्तवायेन त्रयो ऽनर्थाः स्वयं कृताः ॥ ५५ ॥
समुपलब्धतत्त्वार्थैश्चाधिकृतैः परित्रायितो नापित इति ।

A 37 अतो ऽहं ब्रवीमि । जम्बुको ऽडुयुद्धेनेति । करटकः । अथ किमत्र प्राप्तकालं भवान्मन्यते । दमनकः । भद्र । एवमप्यवस्थिते बुद्धिमतां प्रत्युद्धारसामर्थ्यमस्त्येव । उक्तं च ।

सन्नस्य कार्यस्य समुद्भवार्थ-
मागामिनो ऽर्थस्य च संग्रहार्थम् ।
अनर्थकार्यप्रतिषेधनार्थं
यो मन्त्र्यते ऽसौ परमो हि मन्त्रः ॥ ५६ ॥

A 38 तदयं पिङ्गलको महाव्यसने वर्तते । अस्माद्वियोज्यः । कस्मात् ।

व्यसनं हि यदा राजा मोहात्संप्रतिपद्यते ।
विधिना शास्त्रदृष्टेन भृत्यैर्वार्यः प्रयत्नतः ॥ ५७ ॥

A 39 करटकः । कस्मिन्स्वामी पिङ्गलको व्यसने वर्तते । इह हि सप्त व्यसनानि राज्ञाम् ।

स्त्रियो ऽक्षा मृगया पानं वाक्पारुष्यं च पञ्चमम् ।
महच्च दण्डपारुष्यमर्थदूषणमेव च ॥ ५८ ॥

A 40a दमनकः । भद्र । एकत्र सक्तो व्यसनमभिधीयते । करटकः । कथमेकमेवेद व्यसनं भवति । दमनकः । पञ्च मूलव्यसनानि । तद्यथा । अभावः प्रदोषः प्रसङ्गः पीडनं गुणप्रतिलोमत्वमिति । करटकः । कस्तेषां प्रतिविशेषः । दमनकः । स्वाम्यमात्यमित्रजनपददुर्गकोशदण्डानामेकतरस्याप्यभावे व्यसनमभाव इत्यवगन्तव्यम् । यदा बाह्याः प्रकृतयो ऽन्तःप्रकृतयो वा प्रत्येकशो युगपद्वा प्रकुप्यन्ति । तद्व्यसनं प्रदोष इति मन्तव्यम् । प्रसङ्गः पूर्वोक्त एव । तत्र कामजश्चतुर्वर्गः । कोपजस्त्रिवर्गः । तत्र कामजैर्व्याहतस्त्रिविधे कोपे प्रवर्तते । प्रकारवचनेनोच्यते क्रोधो वागर्थदण्डपारुष्येण पराभिद्रोहबुद्धिः । क्रोधान्निरपेक्षः सर्वकृत् । दोषश्रावणं वाक्पारुष्यम् । निरनुक्रोशः स्वविलोपो ऽर्थपारुष्यम् । निर्दयो वधबन्धच्छेदो दण्डपारुष्यम् । इति सप्तधा प्रसङ्गो वर्ण्यते । पीडनमष्टधा । दैवाग्न्युदकव्याधिमरकविषूचिकादुर्भिक्षासुरी वृष्टिरिति । अतिवृष्टिरनावृष्टिर्वै । असावासुरीति विज्ञेया । एतदपि पीडनं मन्तव्यम् । गुणप्रतिलोमता नाम । यदा संधिविग्रहयानासनसंश्रयद्वैधीभावानां षण्णां गुणानां प्रातिलोम्येन वर्तते । संधौ प्राप्ते विग्रहं करोति । विग्रहे प्राप्ते संधिं करोति । एवमेव शेषेष्वपि गुणेषु गुणप्रातिलोम्येन वर्तते । तदा तद्व्यसनं गुणप्रतिलोमतेत्यवगन्तव्यम् ।

A 40b तत्सर्वथायं संजीवकात्पिङ्गलको वियोज्यः । यस्मात्प्रदीपाभावात्प्रकाशाभावः । करटकः । असमर्थो भवान्कथं वियोजयिष्यतीति । दमनकः । भद्र ।

उपायेन हि यच्छक्यं न तच्छक्यं पराक्रमैः ।
काकी कनकसूत्रेण कृष्णसर्पममारयत् ॥ ५९ ॥

A 41 करटकः । कथं चैतत् । दमनकः ।

## ॥ कथा ४ ॥

अस्ति कस्मिंश्चित्प्रदेशे वृक्षः । तस्मिंश्च वायसौ दम्पती प्रतिवसतः स्म । तयोस्तु प्रसवकाले तद्वृक्षविवरानुसार्यसंजातक्रियाण्येवापत्यानि कृष्णसर्पो भक्षयति स्म । अथ तेनापकारनिर्वेदनाद्न्यवृक्षमूलवासिनं प्रियसुहृदं गोमायुमपृच्छत । यथा । भद्र । किमेवं गते प्राप्तकालं भवान्मन्यते । बालघातित्वाच्च वृद्धयोरभाव एवावयोः । गोमायुः ।

भक्षयित्वा बहून्मत्स्यानुत्तमाधममध्यमान् ।
अतिलौल्याद्बकः पश्चान्मृतः कर्कटविग्रहात् ॥ ६० ॥

वायसः । कथं चैतत् । गोमायुः ।

## ॥ कथा ५ ॥

अस्ति । कश्चिद्बको वृद्धभावात्सुखोपायां वृत्तिमाकाङ्क्षमाणः कस्मिंश्चित्सरःप्रदेशे ऽधृतिपरीतमिवात्मनो रूपं प्रदर्शयन्नवस्थितः । तत्रानेकमत्स्यपरिवृत एकः कुलीरको ऽब्रवीत् । माम । किमद्याहारकृत्यं नानुष्ठीयते यथा पुरेति । बकः । अहं मत्स्यादः । तेनोपाधिना विना युष्मान्ब्रवीमि । मया युष्मानासाद्य पूर्वं प्राणरक्षा कृता । संप्राप्तो ममाद्य वृत्तिविच्छेदः । अतो ऽहं विमनाः ।

कुलीरकः । माम । केन कारणेन । वकः । अद्य मत्स्यबन्धैरेतत्सरःसमीपेनातिक्रामद्भिरभिहितम् । बहुमत्स्यो ऽयं ह्रदः । अस्मिञ्जालं प्रक्षिपामः । नगरसमीपे ऽन्ये ह्रदा अनासादिताः । तानासाद्य पुनरागमिष्याम इति कथयामासुः । तत् । भद्र । विनष्टा नाम यूयम् । अहमपि वृत्तिच्छेदादुत्सन्न एव । ततस्तैर्विज्ञप्तः । यथा । यत एवापायः श्रूयते । तत एवोपायो ऽपि लभ्यते । तदर्हस्यस्मान्परित्रातुम् । वकः । अण्डजो ऽहमसमर्थो मानुषविरोधे । किंत्वस्माद्ध्रदादन्यं जलाशयं युष्मान्संक्रामयिष्यामि ।

ततस्तैर्विश्वाससमुपगतैस्तात । भ्रातः । मातुल । मातुल । मां नय । मां नय । प्रथमतरं नयस्वेत्यभिहितम् । असावपि दुष्टमतिः क्रमेण नीत्वा कौशलादजस्रं तान्भक्षयन्परं परितोषमुपागतः ।

कुलीरकस्तु मृत्युभयोद्विग्नो मुहुर्मुहुस्तं प्रार्थितवान् । माम । मामपि तावदर्हसि मृत्युमुखात्परित्रातुमिति । स तु दुष्टात्माचिन्तयत् । निर्विण्णो ऽस्म्यनेनैकरसेन मत्स्यपिशितेन । एनमपि तावद्रसविशेषमास्वादयिष्यामि । ततस्तमुत्क्षिप्य वियत्सर्वाम्भःस्थानानि परिहृत्यैकदेशे तप्तशिलायामवतीर्णः ।

कुलीरको ऽपि पूर्वभक्षितमत्स्यशरीरावयवराशिं दृष्ट्वाचिन्तयत् । निहता अनेन दुरात्मना प्रज्ञापूर्वकं ते मीनाः । तत्किमधुना प्राप्तकालम् । अथवा ।

अभियुक्तो यदा पश्येन्न कांचिद्गतिमात्मनः ।
युध्यमानस्तदा प्राज्ञो म्रियेत रिपुणा सह ॥ ६१ ॥

अनभिज्ञो ऽपि बकः कुलीरकसंदंशग्रहस्य मौर्ख्यात्कुलीरकसकाशाच्छिरश्छेदमवाप्तवान् । कुलीरको ऽपि गृहीत्वा बकग्रीवामुत्पलनालवदाकाशगमनप्रसाधितचिह्नमार्गो मत्स्यान्तिकमेव

प्रायात् । तैश्चाभिहितः । भ्रातः । क्वासौ माम इति । अथासावब्रवीत् । पञ्चत्वमुपगतः । तस्यैतद्दुरात्मनः शिरः । भक्षितास्तेनोपधिना बहवः स्वयूथ्या वः । सो ऽपि मत्सकाशाद्विनष्ट इति ।

अतो ऽहं ब्रवीमि । भक्षयित्वा बहून्मत्स्यानिति । अथ वायसो जम्बुकमाह । आवयोः किं प्राप्तकालं मन्यसे । गोमायुः । सुवर्णसूत्रमादायात्रावासके स्थाप्यताम् । असंशयं तत्स्वामी तं कृष्णसर्पं घातयिष्यति । इत्युक्त्वा स सृगालो ऽपक्रान्तः ।

अथ वायसः सुवर्णसूत्रान्वेषी राजगृहं प्रायात् । दृष्टं च तेनान्तःपुरैकदेशे धौतवस्त्रयुगलोपरि सुवर्णसूत्रमुत्तममणिविरचितं महार्हं प्रक्षाल्य चेटिकया स्थापितम् । तच्चावस्थाप्यान्यया सह कथां कर्तुमारब्धा । वायसस्तु तद्गृहीत्वा वियता शनैरात्मानं दर्शयन्स्वमालयं प्रति प्रायात् । अथारक्षिपुरुषैः प्रासमुद्गरतोमरपाणिभिर्महता जवेन गत्वा वृक्षो ऽवलोकितः । यावत्तेन तत्स्वनीडे स्थापितम् । तत्रैकेनारोहता दृष्टम् । कृष्णभुजंगो वायसपोतान्भक्षयित्वा निद्रावशमगमत् । तेन चासौ सुप्त एव घातितः । तत्कृत्वा सुवर्णसूत्रमादाय गत इति ।

A 42 अतो ऽहं ब्रवीमि । उपायेन हि यच्छक्यमिति । समाप्ते चाख्याने पुनराह ।

यस्य बुद्धिर्बलं तस्य अबुधस्य कुतो बलम् ।
पश्य जातिबलः सिंहः शशकेन निपातितः ॥ ६२ ॥

A 43 करटकः । कथं चैतत् । दमनकः ।

## ॥ कथा ६ ॥

अस्ति । कस्मिंश्चिद्वनान्तरे महान्सिंहः प्रतिवसति स्म । सो ऽजस्रं मृगोत्सादं कुरुते । अथ ते मृगाः सर्वे एवाभिमुखाः प्रणतचित्ता

हरिततृणाङ्कुरवक्त्रधारिणो ऽवनितलासक्तजानवस्तं मृगराजं विज्ञापयामासुः । भो मृगराज । किमनेन परलोकविरुद्धेन स्वामिनो नृशंसेन निष्कारणं सर्वमृगोत्सादनकर्मणा कृतेन । वयं तावद्विनष्टा एव । तवाप्याहारस्याभावः । तद्भयोपद्रवः । तत्प्रसीद । वयं तु स्वामिन एकैकं वनचरं वारेण स्वजातिसमुत्थं प्रेषयामः । तथा कृते कालपर्ययाच्छशकस्य वारो ऽभ्यागतः । स तु सर्वमृगाज्ञापितो रुषितमनाश्चिन्तयामास । अन्तकरो ऽयं मृत्युमुखप्रवेशः । किमधुना प्राप्तकालं ममेति । अथवा बुद्धिमतां किमशक्यम् । अहमेवोपायेन व्यापादयामि सिंहम् । इति तस्याहारवेलां क्षपयित्वा गतः । असावपि क्षुत्क्षामकण्ठः क्रोधसंरक्तनयनः स्फुरद्वदनदशनसंघर्षदंष्ट्राकरालो लाङ्गूलास्फालनाकारभयकृत्तमाह । सुक्षुद्रैरपि किं क्रियते ऽन्यत्र प्राणवियोगात् । स त्वमद्य गतासुरेव । को ऽयं तव वेलात्ययः । शशकः । न ममात्मवशस्यातिक्रान्ता । स्वामिन् । आहारवेला । सिंहः । केन विधृतो ऽसि । शशः । सिंहेनेति । तच्छ्रुत्वा परमोद्विग्नहृदयः सिंहो ऽब्रवीत् । कथमन्यो ऽत्र मद्भुजपरिरक्षिते वने सिंह इति । शशो बाढमित्याह ।

अथ सिंहो व्यचिन्तयत् । किमनेन हतेन कारणं मम । तं सपत्नं संदर्शयिष्यतीति । तं च व्यापाद्यैनं भक्षयिष्यामि । इति तमाह । मम तं दुरात्मानं दर्शयस्वेति । असावपि शशो ऽन्तर्लीनमवहस्य बृहस्पत्युशनसोर्नीतिशास्त्रं प्रमाणीकृत्य स्वार्थसिद्धये विमलजलसंपन्नं द्विपुरुषप्राप्योदकमिष्टकाचितं महान्तं कूपमदर्शयत् । असावप्यात्मकायप्रतिबिम्बानभिज्ञतया कुमार्गापन्नचित्तो ऽयमसौ सपत्न इति मत्वा सहसैव तस्योपरि संनिपतितो मौर्ख्यात्पञ्चत्वमगमत् ।

A 44 अतो ऽहं ब्रवीमि । यस्य बुद्धिर्बलं तस्येति । तच्छ्रुत्वा करटको ऽब्रवीत् । शिवास्ते पन्थानः । यथाभिप्रेतमनुष्ठीयतामिति ।

A 45 अथ दमनकः सिंहस्योपश्लिष्टः प्रणतश्च तस्मै । तेनाभिहितः । कुत आगम्यते भवता । चिराद्दृष्टो ऽसि । सो ऽब्रवीत् । आत्ययिकं भर्त्रे निवेदयितुम् । न चायं मनोरथः संश्रितानाम् । किं च । उत्तरक्रियाकालविनिपातभीतैर्निवेद्यते । तथा हि ।

अनियुक्ता हि साचिव्ये यद्वदन्ति मनीषिणः ।
अनुरागद्रवस्यैताः प्रणयस्यातिभूमयः ॥ ६३ ॥

A 46a श्रद्धेयवचनत्वाच्च दमनकस्य सादरमपृच्छत् । किं भवता तर्कितमिति । दमनकः । अयं तावत्संजीवकस्तवोपरि द्रोग्धुमतिः । विश्वासोपगतश्चायं मत्संनिधावाह । दृष्टास्य पिङ्गलकस्य मया सारासारता शक्तित्रयस्य । यत एनं हत्वा स्वयमेव वनं ग्रहीष्यामीति ।

A 46b तच्च वज्राशनिदुःसहतरं वचनं श्रुत्वा क्षुभितहृदयः पिङ्गलको मोहमुपागतो न किंचिदभिहितवान् । दमनकस्तस्याकारं दृष्ट्वैवमाह । अयमसावेकमन्त्रिप्राधान्येन दोष आपतितः । साधु चैतदुच्यते ।

अत्युच्छ्रिते मन्त्रिणि पार्थिवे च
विष्टभ्य पादावुपतिष्ठते श्रीः ।
सा स्त्रीस्वभावादसहा भरस्य
तयोर्द्वयोरेकतरं जहाति ॥ ६४ ॥

कण्टकस्य तु भग्नस्य दन्तस्य चलितस्य च ।
अमात्यस्य च दुष्टस्य मूलादुद्धरणं सुखम् ॥ ६५ ॥

सुष्ठु चेदमुच्यते ।

एकं भूमिपतिः करोति सचिवं राज्ये प्रमाणं यदा
तं मोहाच्छ्रयते मदः स च मदात्तस्यैव निर्विद्यते ।
निर्विण्णस्य पदं करोति हृदये तस्य स्वतन्त्रस्पृहा
स्वातन्त्र्यस्पृहया स एव नृपतेः प्राणानभिद्रुह्यति ॥ ६६ ॥

A 47 स चाधुना निरवग्रहः सर्वकार्येष्विच्छति प्रवर्तितुम् । तत्किमत्र युक्तम् । अपि च ।

कार्याण्यर्थोपमर्देन स्वानुरक्तो ऽपि साधयेत् ।
नोपेक्ष्यः सचिवो राज्ञा स तं मथ्नात्युपेक्षितः ॥ ६७ ॥

A 48 तच्च श्रुत्वा सिंहो ऽब्रवीत् । अयं तावदसदृशो मम भृत्यः । कथं ममोपरि विकरिष्यति । दमनकः ।

न सो ऽस्ति पुरुषो राज्ञां यो न कामयते श्रियम् ।
अशक्तभग्नमानास्तु नरेन्द्रं पर्युपासते ॥ ६८ ॥

A 49 सिंहः । भद्र । तथापि तस्योपरि मे चित्तं न प्रदुष्यति । यत्कारणम् ।

लीलयापि हि यत्सन्तः प्रतिपन्नाः सकृत्क्वचित् ।
न तन्मिथ्या महात्मानः कुर्वन्त्युन्नतचेतसः ॥ ६९ ॥

अपि च ।

अनेकदोषदुष्टो ऽपि कायः कस्य न वल्लभः ।
कुर्वन्नपि व्यलीकानि यः प्रियः प्रिय एव सः ॥ ७० ॥

A 50 दमनकः । अत एवायं दोषः । व्युदस्य सर्वं मृगजनं यस्योपर्यास्था प्रतिबद्धा । सो ऽयमधुना स्वामित्वमभिवाञ्छति । अपि च ।

यस्मिन्नेवाधिकं चक्षुरारोपयति पार्थिवः ।
सुते वा तत्कुलीने वा स लक्ष्म्या ह्रियते मनः ॥ ७१ ॥

A 51 तदसंभाव्यमेतत्परिहरणीयं दूरेण प्रकटसंबन्धेषु । यच्च महाकायो ऽयमिति त्वमुपकाराय चिन्तयसि । तदपि नैवम् ।

किं गजेन प्रभिन्नेन गजकर्माण्यकुर्वता ।
स्थले वा यदि वा निम्ने श्रेयान्कृत्यकरश्च यः ॥ ७२ ॥

A 52 तेन हि । देव । नायमुपायः ।

सतां मतमतिक्रम्य यो ऽसतां वर्तते मते ।
अचिरात्स च्युतः स्थानाद्विपतां वर्तते वशे ॥ ७३ ॥

तेन ।

अप्रियस्यापि वचसः परिणामाविरोधिनः ।
वक्ता श्रोता च यत्रास्ति रमन्ते तत्र संपदः ॥ ७४ ॥

अपि च ।

मौलभृत्योपरोधेन नागन्तून्प्रतिमानयेत् ।
नातः परतरो ऽन्यो ऽस्ति राज्यभेदकरो गदः ॥ ७५ ॥

सिंहः ।

उक्तो भवति यः पूर्वं गुणवानिति संसदि ।
न तस्य वाच्यं नैर्गुण्यं प्रतिज्ञां परिरक्षता ॥ ७६ ॥

A 53 अन्यच्च । मयास्य शरणागत इति कृत्वाभयमभ्यवपत्तिश्च दत्ता । तत्कथमयमकृतज्ञः । दमनकः ।

दुर्जनः प्रकृतिं याति सेव्यमानो ऽपि यत्नतः ।
स्वेदनाभ्यञ्जनोपायैः श्वपुच्छमिव नामितम् ॥ ७७ ॥

अपि च ।

अपृष्टस्तस्य तद्ब्रूयाद्यस्य नेच्छेत्पराभवम् ।
एष एव सतां धर्मो विपरीतो ऽसतां मतः ॥ ७८ ॥

A 54 अन्यच्च । येनैतदभिहितम् ।

स्वजनो ऽथ सुहृन्नृपो गुरुर्वा
पुरुषेणोत्पथगो निवारणीयः ।
विनिवर्तयितुं स चेदशक्यः
परतस्तस्य मनोनुगं विधेयम् ॥ ७९ ॥

स तावद्द्रोही । किंतु ।

हितकृद्भिरकार्यमीहमानाः
सुहृदः क्लेशपरिग्रहान्निवार्याः ।
परिपूर्णमिदं हि साधुवृत्तं
कथितं सद्भिरसाधुवृत्तमन्यत् ॥ ८० ॥

स स्निग्धो ऽकुशलान्निवारयति यस्तत्कर्म यत्कौशलं
सा स्त्री यानुविधायिनी स च पुमान्यः सद्भिरभ्यर्च्यते ।
सा श्रीर्या न मदं करोति स सुखी यस्तृष्णया नोह्यते
तन्मित्रं यदयन्त्रणं स पुरुषो यः खिद्यते नेन्द्रियैः ॥ ८१ ॥

देव ।

सुप्तं वह्नौ शिरः कृत्वा भुजंगप्रस्तरे वरम् ।
रुचिमद्व्यसनास्वादे नान्यथोपेक्षितं मनः ॥ ८२ ॥

A 55 तदेतत्संजीवकसंसर्गव्यसनं पादानां त्रिवर्गघातायेति । अथ बहुप्रकारं विज्ञाप्यमानाः पादा मद्वचनमाक्षिप्य कामतः प्रवर्तन्ते । तदुत्तरत्रापचारे भृत्यदोषो न कार्य इति । उक्तं च ।

नृपः कामासक्तो गणयति न कार्यं न च हितं
यथेष्टं स्वच्छन्दः प्रविचरति मत्तो गज इव ।
ततो मानाध्मातः पतति स यदा शोकगहने
तदा भृत्ये दोषान्क्षिपति न निजं वेत्त्यविनयम् ॥ ८३ ॥

A 56 सिंहः । भद्र । एवमवस्थिते किमसौ प्रत्यादेश्यः । दमनकः । कथं प्रत्यादिश्यते । कतर एष नयः ।

प्रत्यादिष्टस्त्वरते रिपुरपकर्तुं बलात्प्रहर्तुं वा ।
तस्मात्प्रत्यादेष्टुं न्याय्यो ऽरिः कर्मणा न गिरा ॥ ८४ ॥

A 57 सिंहः । स तावच्छष्पभुक् । वयं पिशितभुजः । तत्किमसौ ममापकर्तुं समर्थः । दमनकः । एवमेतत् । स शष्पभुक् । पादाः पिशितभुजः । सो ऽन्नभूतः । पादा

भोक्तृभूताः । तथाप्यसौ यदि स्वयमनर्थं न करिष्यति । ततो ऽन्यस्मादुत्पादयिष्यति । सिंहः । का शक्तिरस्य स्वतो ऽपकर्तुं परतो ऽपकर्तुं वा । दमनकः । भवांस्तावदनेकगजयुद्धरदनसंनिपातव्रणशबलत्वान्नित्यमित्थं भूतः । अयं त्वत्समीपवासी प्रकीर्णविण्मूत्रः । तदनुषङ्गात्कृमयः संभविष्यन्ति । *युष्मच्छरीरसामीप्यात्क्षतविवरानुसारिणो ऽन्तः प्रवेक्ष्यन्ति ।* तथा त्वं विनष्ट एव । उक्तं च ।

मा त्वविज्ञातशीलाय कश्चिद्दद्यात्प्रतिश्रयम् ।
टिट्टिभस्य तु दोषेण हता मन्दविसर्पिणी ॥ ८५ ॥

A 58 पिङ्गलकः । कथमेतत् । दमनकः ।

## ॥ कथा ७ ॥

अस्ति कस्यचिद्राज्ञः सर्वगुणोपेतमनन्यसदृशं शयनम् । तस्मिन्प्रच्छदपटैकदेशे मन्दविसर्पिणी नाम यूका प्रतिवसति स्म । अथ तस्मिंष्टिट्टिभो नाम मत्कुणो वायुना प्रेरितः संनिपतितः । स तु तच्छयनमतिसूक्ष्मोत्तरच्छदमुभयोपधानं जाह्नवीपुलिनविपुलं परममृदु सुरभि च दृष्ट्वा परं परितोषमुपगतः । तत्स्पर्शाकृष्टमना इतश्चेतः परिभ्रमन्कथमपि तया मन्दविसर्पिण्या समेतः । तयाभिहितः । कुतस्त्वमस्मिन्नयोग्याधिवास आगतः । अपगम्यतामस्मादिति । मत्कुणः । आर्ये । मया तावदिहानेकप्रकाराणि मांसान्यास्वादितानि ब्राह्मणक्षत्रियविट्शूद्रान्तःस्थानि रुधिराणि च । तानि तु रूक्षाणि पिच्छिलान्यतुष्टिकराण्यमनोज्ञानि । यः पुनरस्य शयनस्याधिष्ठाता । तस्य मनोरममृतोपममसृग्भविष्यति । अजस्रं भिषग्भिः प्रयत्नादौषधाद्युपक्रमाद्वातपित्तश्लेष्मनिरोधादनामयतया स्निग्धपेशलद्रवैः सखण्डगुडदाडिमत्रिकटुकपटुभिः स्थलजजलजखेचरबलवत्प्रधानपिशितोपबृंहितैराहारैरुपचितं रुधिरं रसायनमिव मन्ये । तच्च सुरभि पुष्टिकरं चेच्छाम्यहं त्वत्प्र-

सादादास्वादयितुमिति । अतो ऽसौ मन्दविसर्पिण्याह । असंभाव्यमेतत्त्वद्विधानामग्निमुखानां दंशवृत्तीनाम् । अपगम्यतामस्माच्छयनात् । ततो ऽसौ तस्याः पादयोर्निपतितः । सा तु दाक्षिण्यात्तथा नामेति प्रतिपन्ना । किंतु नैवाकाले न चातिमृदुभागे त्वयास्य प्रहर्तव्यमिति । सो ऽब्रवीत् । को ऽस्य कालः । अनभिज्ञो ऽहमपरिचितत्वात् । सा त्वकथयत् । मधुपानश्रमागतनिद्रस्य रतिविलासनिर्भरसुप्तस्य च शनैर्मृदुतया भवता विचारणीयम् । मद्श्रमनिद्रापरीतकायो नाशु प्रबुध्यत इति । एवमवस्थापिते प्रथमप्रदोष एवाकालज्ञेन दष्टः । असावपि पार्थिव उल्मुकदग्ध इव संलीनकुक्षिप्रदेशः ससंभ्रममुत्थायाह । अहो ' दष्टो ऽस्मि केनापि । अथ मत्कुणश्चकितत्वाद्राजवचनं श्रुत्वा शयनादवतीर्यान्यद्विवरमाश्रितः । शय्यापालैरपि स्वाम्यादेशात्सुनिपुणमन्विषद्भिर्वस्त्रं परिवर्तयद्भिरन्तर्लीना मन्दविसर्पिणी समासादिता व्यापादिता च ।

A 59 अतो ऽहं ब्रवीमि । सा त्वविज्ञातशीलाय दद्यात्कश्चित्प्रतिश्रयमिति । अन्यच्च । पादानां वयं क्रमागता भृत्याः । तदलं ह्यस्यातिविस्रम्भेण । उक्तं च ।

त्यक्ता आभ्यन्तरा येन बाह्याश्चाभ्यन्तरीकृताः ।
स भूमौ निहतः शेते मूर्खश्चण्डरवो यथा ॥ ८६ ॥

A 60 पिङ्गलकः । कथमेतत् । सो ऽब्रवीत् ।

॥ कथा ८ ॥

अस्ति कस्मिंश्चिन्नगरसमीपे संनिकृष्टविवराभ्यन्तरशायी जम्बुकश्चण्डरवो नाम । स कदाचिदाहारमन्वेषमाणः क्षपामासाद्य क्षुत्क्षामगलः संमीलितलोचनः परिभ्रमन्नगरं प्रविष्टः । तन्नगरवा-

सिभिश्च सारमेयैस्तीक्ष्णदशनकोटिविलुप्यमानावयवो भयभैरवफेत्काररवपूरितदिग्विवर इतस्ततः प्रस्खलन्पलायमानः कस्मिंश्चिद्रजकगृहे नीलीकलशे संनिपतितः । श्वगणश्च यथागतं प्रायात् ।

असावपि कृच्छ्रेणायुःशेषतयास्मान्नीलीकलशात्समुत्तस्थौ । अथास्य तच्छरीरं नीलीरसरञ्जितं दृष्ट्वा समीपवर्तिनः क्रोष्टुकगणाः को ऽयमिति भयतरलदृशः सर्वा दिशः प्रदुद्रुवुः । असावप्यचिन्तयत् । नूनमिमां स्वरूपविकृतिं दृष्ट्वैते पलायन्त इति । अथ धीरचित्तस्तांश्छनैरवादीत् । अलं संभ्रमेण । अहमाखण्डलाज्ञया सकलश्वापदकुलपालनक्षमः क्षितितलमागत इति ।

अथ तद्वचनमाकर्ण्य सिंहव्याघ्रचित्रकवानरशशहरिणवृपदंशजम्बुकादयः श्वापदगणास्तं प्रणेमुः । प्रतिदिनं च केसरिकरजकुलिशदारितमत्तेभपिशितैरापूर्यमाणकुक्षिः कक्षमिव तं जम्बुकपूगं वहिः कृत्वा सिंहव्याघ्रादीनासन्नवर्तिनश्चकार । एकदा त्वसौ विविधपिशितनाशितक्षुद्दिक्षु स्थितानां क्रोष्टुकानां क्रोशतां निनादं श्रुत्वा त्वरिततरमुच्चैर्निननाद ।

अतस्ते सिंहादयस्त्रपया भूभागदृष्टिभाजः कष्टमहो । वञ्चिताः स्मः । क्रोष्टायमित्यवधार्य रुषा तं परुषगिरं नाशितवन्त इति ।

A 61 अतो ऽहं ब्रवीमि । त्यक्ता आभ्यन्तरा येन वाह्याश्चाभ्यन्तरीकृता इति ।

A 62 आख्याते चाख्याने पिङ्गलक आह । भद्र । कस्तस्य युद्धमार्ग इति । दमनकः । अन्यदासौ स्रस्ताङ्गः पादान्तिकमागच्छति । अथ यदि शृङ्गाग्रप्रहरणाभिमुखो योद्धुचित्तः सचकितश्चोपसर्पेत् । तत्पादैरवगन्तव्यम् । द्रोग्धुबुद्धिरयमिति ।

A 63 एवमुक्त्वा संजीवकसकाशं प्रयातः । तस्यापि द्रोग्धुमतिरधृतिपरीतमात्मानमदर्शयत् । तेन चाभिहितः । भद्र । कुशलमिति । दमनकः । कुतः खलु कुशलमनुजीविनाम् । कस्मात् ।

संपत्तयः परायत्ताः सदा चित्तमनिर्वृतम् ।
स्वजीविते ऽप्यविश्वासस्तेषां ये राजसंश्रिताः ॥ ८७ ॥

अप्यग्निजीविका * * * * * * * * * * * ।
* * * * * * * * * * * * * * * * ॥ ८८ ॥

सुष्ठु चेदमुच्यते ।

आचार्या नरपतयश्च तुल्यशीला
न ह्येषां परिचितिरस्ति सौहृदं वा ।
शुश्रूषां चिरमपि संचितां प्रयत्ना-
त्संक्रुद्धा रज इव नाशयन्ति मेघाः ॥ ८९ ॥

अपि च ।

को ऽर्थान्प्राप्य न गर्वितो भुवि नरः कस्यापदो ऽस्तं गताः
स्त्रीभिः कस्य न खण्डितं भुवि मनः को नाम राज्ञां प्रियः ।
कः कालस्य न गोचरान्तरगतः को ऽर्थी गतो गौरवं
को वा दुर्जनवागुरानिपतितः क्षेमेण यातः पुमान् ॥ ९० ॥

तत्सर्वथा ।

कः कालः कानि मित्राणि को देशः कौ व्ययागमौ ।
को वाहं का च मे शक्तिरिति चिन्त्यं मुहुर्मुहुः ॥ ९१ ॥

A 64a हृदयान्तर्निहितभावस्य तस्य वचनं श्रुत्वा संजीवको ऽब्रवीत् । भद्र । अथ किम् । दमनकः । भवांस्तावन्मम सुहृत् । अवश्यं च मया तव हितमाख्येयम् । स्वामी पिङ्गलकस्तवोपरि द्रोग्धुमतिः । तेन चाभिहितम् । संजीवकं हत्वा सर्वक्रव्यादांस्तदामिषेण तर्पयामीति ।

A 64b तच्छ्रुत्वासौ परं विषादमगमत् । दमनकः । यदत्र करणीयम् । तदहीनकालं संचिन्त्यतामिति । पूर्वकालं श्रद्धेयवचनत्वाच्च दमनकस्य सुतरामाविग्नहृदयः परं भयमुपागतः संजीवकः । सुष्ठु खल्विदमुच्यते ।

दुर्जनगम्या नार्यः प्रायेणापात्रभृद्भवति राजा ।
कृपणानुसारि च धनं देवो गिरिदुर्गवर्षी च ॥ ९२ ॥

A 65 एवं चाचिन्तयत् । कष्टं भोः । किमिदमापतितं ममेति । अपि च ।

आराध्यमानो बहुभिः प्रकारै-
राराध्यते नाम किमत्र चित्रम् ।
अयं त्वपूर्वः प्रतिमाविशेषो
यः सेव्यमानो रिपुतामुपैति ॥ ९३ ॥

A 66 तत्सर्वथाशक्यो ऽयमर्थः ।

निमित्तमुद्दिश्य हि यः प्रकुप्यति
ध्रुवं स तस्यापगमे प्रसीदति ।

अकारणद्वेषि मनो हि यस्य वै
कथं परस्तं परितोषयिष्यति ॥ ९४ ॥

साधु चेदमुच्यते ।

सरसि वकुशस्ताराछायां दशन्परिवञ्चितः
कुमुदविटपान्वेषी हंसो निशास्वविचक्षणः ।
न दशति पुनस्ताराशङ्की दिवापि सितोत्पलं
कुहकचकितो लोकः सत्ये ऽप्यपायमपेक्षते ॥ ९५ ॥

अथवा ।

व्यलीकमपरंपरेण न हि नाम नोत्पद्यते
न चापि न भवन्त्यकारणवशेन रोमोद्गमाः ।
न तु प्रतिविशिष्टबुद्धिरसमीक्ष्य तत्त्वार्थत-
श्चिरानुगतसर्वभावहृदयो जनस्त्यज्यते ॥ ९६ ॥

अपि च ।

वैद्यसांवत्सरामात्या यस्य राज्ञः प्रियंवदाः ।
आरोग्यधर्मकोशेभ्यः क्षिप्रं स परिहीयते ॥ ९७ ॥

67 आह च । किं मयापकृतं स्वामिनः पिङ्गलकस्य । दमनकः । वयस्य । निर्निमित्तापकारा रन्ध्रान्वेषिणश्च राजानः । संजीवकः । एवमेतत् । साधु चेदमुच्यते ।

भक्तानामुपकारिणां प्रियहितव्यापारयुक्तात्मनां
सेवासंव्यवहारतत्त्वविदुषामेकार्पणानामपि ।
व्यापत्तिः स्खलितान्तरेषु नियता सिद्धिर्भवेद्वा न वा
तस्मादम्बुनिधेरिवावनिपतेः सेवा सदाशङ्किनी ॥ ९८ ॥

68 स्वभावश्चायम् ।

स्निग्धैरेव ह्युपकृतिगणैर्द्वेष्यतामेति कश्चि-
च्छाठ्यादन्यैरपकृतिशतैः प्रीतिमेवोपयाति ।
दुर्ग्राह्यत्वान्नृपतिमनसां नैकभावाश्रयाणां
सेवाधर्मः परमगहनो योगिनामप्यगम्यः ॥ ९९ ॥

अथवा ।

गुणा गुणज्ञेषु गुणीभवन्ति
ते निर्गुणं प्राप्य भवन्ति दोषाः ।
सुस्वादुतोयप्रवहा हि नद्यः
समुद्रमासाद्य भवन्त्यपेयाः ॥ १०० ॥

अल्पे च गुणाः स्फीतीभवन्ति गुणसमुचितेषु पुरुषेषु ।
शशिनः श्वेतस्य गिरेः शिखरप्राप्ता इव मयूखाः ॥ १०१ ॥
नश्यन्ति गुणशतान्यपि पुरुषाणामगुणवत्सु पुरुषेषु ।
अञ्जनगिरिशिखरेष्विव निशासु चन्द्रांशवः पतिताः ॥ १०२ ॥

साधु चेदमुच्यते ।

कृतशतमसत्सु नष्टं सुभाषितशतं च नष्टमवुधेषु ।
वचनशतमवचनकरे वुद्धिशतमचेतने नष्टम् ॥ १०३ ॥
नष्टमपात्रे दानं नष्टं हितमफलवुद्धिविज्ञाने ।
नष्टो गुणो ऽगुणज्ञे नष्टं दाक्षिण्यमकृतज्ञे ॥ १०४ ॥

साधु चेदमुच्यते ।

अरण्यरुदितं कृतं शवशरीरमुद्वर्तितं
स्थले ऽब्जमवरोपितं वधिरकर्णजापः कृतः ।
श्वपुच्छमवनामितं सुचिरमूषरे वर्षितं
कृतान्धमुखमण्डना यदवुधो जनः सेवितः ॥ १०५ ॥

अथवा ।

चन्दनतरुषु भुजंगा जलेषु कमलानि तत्र च ग्राहाः ।
गुणघातिनः खलु खला भोगेषु क्व नु सुखान्यविघ्नानि ॥ १०६ ॥

A 69 अपि च । पन्नगैर्नगाः सपुष्पफला ग्राहैर्नलिन्यः सपङ्कजा दूषिताश्छायाश्च शार्दूलैः क्षुद्रैश्च सेवा । भद्रं हि दुर्लभमकण्टकम् । तथा च ।

केतक्यः कण्टकैर्व्याप्ता नलिन्यः पङ्कसंभवाः ।
विलासिन्यः सकुट्टन्यः क्व रत्नमनुपद्रवम् ॥ १०७ ॥

A 70 दमनकः । अयं तावत्स्वामी पिङ्गलक आदौ मधुरः ' परिणामे विषप्रतिम इति । विचिन्त्य संजीवको ऽब्रवीत् । भद्र ' एवमेतत् । मयैवैतदस्मादनुभूतम् ' यथा ।

दूरादुच्छ्रितपाणिरार्द्रनयनः प्रोत्सारितार्धासनो
गाढालिङ्गनतत्परः प्रियकथासंप्रश्नदत्तोत्तरः ।
अन्तर्गूढविषो वहिर्मधुमयश्चातीव मायापटुः
को नामायमपूर्वनाटकविधिर्यः शिक्षितो दुर्जनैः ॥ १०८ ॥

अपि च ।

आदावप्युपचारचाटुविनयालंकारशोभान्वितं
मध्ये चापि विचित्रवाक्यकुसुमैरभ्यर्चितं निष्फलैः ।
पैशुन्याविनयावमानमलिनं वीभत्समन्ते च य-
द्दूरे वो ऽस्त्वकुलीनसंगतमसद्धर्मार्थमुत्पादितम् ॥ १०९ ॥

A 71 कष्टं भोः । क्वाहं शष्पभुक् । क्व सिंहसंसर्गः । तथा च ।

हुताशज्वालाभे स्थितवति रवावस्तशिखरे
पिपासुः किञ्जल्कं प्रविशति सरोजं मधुकरः ।
तदन्तः संरोधं गणयति न संध्यासमयजं
जनो ऽर्थी नापायं विमृशति फलैकान्ततृषितः ॥ ११० ॥

कमलमधुनस्त्यक्त्वा पानं विहाय नवोत्पलं
प्रकृतिसुभगां गन्धोद्दामामपास्य च मालतीम् ।
शठमधुकराः क्षिप्यन्तीमे कटाम्बुषु दन्तिनां
सुलभमपहायैवं लोकः कटेषु निहन्यते ॥ १११ ॥

गण्डोपान्तेष्वविरलस्रुतं वारि मत्तद्विपानां
ये सेवन्ते नवमधुरसास्वादलुब्धा द्विरेफाः ।
ते तत्कर्णव्यजनपवनप्रेङ्खितैर्भिन्नदेहा
भूमिं प्राप्ताः कमलविवरक्रीडितानि स्मरन्ति ॥ ११२ ॥

A 72 अथवा गुणवतामयं दोषः ।

स्वफलनिचयः शाखाभङ्गं करोति वनस्पते-
र्गमनमलसं बर्हाटोपः करोति शिखण्डिनः ।
चतुरगमनो यो जात्यो ऽश्वः स गौरिव वाह्यते
गुणवति जने प्रायेणैते गुणाः खलु वैरिणः ॥ ११३ ॥

अथवा ।

नरेन्द्रा भूयिष्ठं गुणवति जने ऽत्यन्तविमुखाः
स्त्रियः प्रायो लोभाद्व्यसनिषु च मूर्खेष्वभिरताः ।
नराणां माहात्म्यं गुणत इति मिथ्या स्तुतिरियं
जनः प्रायेणायं न हि पुरुषतत्त्वं गणयति ॥ ११४ ॥

सिंहैः पञ्जरयन्त्रणापरिभवप्रम्लानदीनाननै-
र्नागैरङ्कुशभिन्नमस्तकतटैर्मन्त्रालसैः पन्नगैः ।
विद्वद्भिश्च निराश्रयव्यसनिभिः शूरैश्च भाग्यक्षतैः
कालः क्रीडनकैरिवात्मरचितैः प्रेङ्खोलनैः क्रीडति ॥ ११५ ॥

A 73 तत्सर्वथा क्षुद्रमण्डलान्तरप्रविष्टस्य मे जीवितं नास्ति । उक्तं च ।

बहवः पण्डिताः क्षुद्राः सर्वे मायोपजीविनः ।
कुर्युर्दोषमदोषं वा उष्ट्रे काकादयो यथा ॥ ११६ ॥

A 74 दमनकः । कथं चैतत् । संजीवकः ।

## ॥ कथा ९ ॥

अस्ति । कस्मिंश्चिद्वनोद्देशे मदोत्कटो नाम सिंहः प्रतिवसति स्म । तस्यानुचरास्त्रयः पिशिताशिनो द्वीपिवायसगोमायवः । अथ तैर्भ्रमद्भिर्दृष्टः सार्थवाहपरिभ्रष्ट उष्ट्रः । तं चाज्ञातपूर्वरूपं हास्यजननं दृष्ट्वा सिंहः पृष्टवान् । इदमपूर्वं सत्त्वमिह वने पृच्छ्यताम् । कस्त्वमिति । ततो ऽवगततत्त्वार्थो वायसो ऽब्रवीत् । आख्यातनामोष्ट्रो ऽयमिति । ततस्तेन सिंहसकाशं विश्वास्यानीतः । तेनापि यथावृत्तमात्मनो वियोगः सार्थवाहात्समाख्यातः । सिंहेन चास्याभ्यवपत्तिरभयप्रदानं च दत्तम् ।

एवं च वर्तमाने कदाचित्सिंहो वन्यगजयुद्धरदनक्षतशरीरो गुहावासी संवृत्तः । पञ्चषड्दिवसातिक्रान्ते च काले सर्व एव त आहारवैकल्यादात्ययिकमापतिताः । यतो ऽवसन्नाः । ततः सिंहेनाभिहिताः । अहमनया रुजा न क्षमः पूर्ववदाहारं भवतामुत्पादयितुम् । ते यूयमात्मार्थे ऽपि तावदभ्युद्यमं कुरुत । ते तमाहुः । एवं गते किमस्माकमात्मपुष्ट्यर्थेनेति । सिंहः । साध्वनुजीविवृत्तं मदुपरि भक्तिश्च भवताम् । अतिशोभनमभिहितम् । शक्ता भवन्तः । सरुजश्चाहम् । तन्ममैतदवस्थस्योपनयताहारमिति । यदा च न किंचिदूचुः । तदा तेनाभिहिताः । किमनया व्रीडया । अन्विष्यतां किंचित्सत्त्वम् । अहमेतदवस्थो ऽपि युष्माकमात्मनश्चोत्पादयिष्ये प्राणयात्रार्थमिति ।

एवमुक्त्वा ते ऽप्युत्थाय सह क्रथनकेन वनान्तरं प्रविष्टाः । व्युदस्य क्रथनकं दुष्टमन्त्रमारब्धाः । तत्र वायस आह । विनाशिता वयमनेन स्वामिना स्वाधीने ऽप्यर्थे । तावाहतुः । कथम् । सो ऽब्रवीत् ।

नन्वयं क्रथनक इति । त आहुः । अयमस्माकं विश्वासोपगतः शरणागतो वयस्यत्वे ऽनुज्ञातः । स आह । शष्पभुजः पिशिताशिनश्च विषमसंबन्धाः । ततस्तावूचतुः । स्वामिनायमभयप्रदानेन रक्ष्यते । तेन चायुक्तमशक्यं चैतदिति । पुनरपि वायसो ऽब्रवीत् । तिष्ठत यूयम् । यावदहमेवैतदर्थं संप्रतिपादयिष्यामि । इत्युक्त्वा सिंहसकाशमगमत् । सिंहेन चाभिहितम् । अन्विष्टं युष्माभिः किंचित्सत्त्वमिति । काकः । यस्य चक्षुर्बलं वा स्यात् । सो ऽन्विष्यतु । वयं तु सर्व एवाहारवैकल्यादन्धाः परिक्षीणशक्तयश्च । किंतु प्राप्तकालमवश्यं विज्ञप्यसे । स्वामिना विनाशितः स्वात्मनात्मा स्वाधीने ऽप्यर्थे । सिंहः । कथम् । काकः । नन्वयं क्रथनक इति । सिंहः । कष्टम् । नृशंसमेतत् । मयास्याभ्यवपत्तिरभयं च प्रसादीकृतम् । अपि च ।

न गोप्रदानं न महीप्रदानं
न चान्नदानं हि तथा प्रधानम् ।
यथा वदन्तीह महाप्रधानं
सर्वप्रधानेष्वभयप्रदानम् ॥ ११७ ॥

काकः । अहो स्वामिनो धर्मशास्त्रं प्रति प्रतिभा । एतदन्यदपि प्रधानं महर्षिवचनम् । यथा श्रेयसामर्थे पापीयानारम्भः । अपि चोक्तम् ।

त्यजेदेकं कुलस्यार्थे ग्रामस्यार्थे कुलं त्यजेत् ।
ग्रामं जनपदस्यार्थे स्वात्मार्थे पृथिवीं त्यजेत् ॥ ११८ ॥

पुनश्चाह । मा स्वामी स्वयं व्यापादयतु । मयास्योपधिना वध आरब्धः । सिंहः । कथमिव । काकः । अयं तावदेतदवस्थं स्वामिनमस्मांश्च दृष्ट्वा स्वयमात्मानमन्यपुष्ट्यर्थं स्वर्गगमनाय सत्त्वहिताय

निवेदयति । एवमभिहितवति वायसे सिंहो मतिभ्रममिवार्पितो न किंचिदप्युदाहृतवान् । असावपि पुनस्तत्सकाशं गत्वा कृतकवचनैः प्रत्येकं विज्ञापितवान् । सिंहान्तिकं गतैर्युष्माभिरेवं वक्तव्यमिति । ततः कृतसंविदः सह क्रथनकेन सिंहसकाशं गताः । अथ वायसः प्रणम्य सिंहं विज्ञापितवान् । देव । स्वामिशरीरं सर्वथा रक्ष्यमस्मच्छरीरेणेति । अथासावाह । अकल्पकार्यो भवान् । न युष्मच्छरीरोपभोगे कृते ऽप्यस्माकं किंचित्तृप्तिकारणं भवति । तस्मिंश्चापयाते गोमायुरभिहितवान् । अस्मान्मम विशिष्टतरं शरीरम् । तन्मत्प्राणैः क्रियतां प्राणयात्रेति । तमपि तथैवाभिहितवान् । अपयाते च तस्मिन्द्वीप्याह । आभ्यां मम विशिष्टतरं शरीरमिदमुपयुज्यतामिति । तमप्यसावाह । अकल्पकार्यो भवानपीति । तच्छ्रुत्वा क्रथनको ऽचिन्तयत् । नैवात्र कश्चिद्विनाश्यते । तदहमप्येवमेव ब्रवीमि । तत उत्थाय सिंहान्तिकमुपगम्याब्रवीत् । देव । एभ्यो मम विशिष्टतरं शरीरम् । तस्मान्मच्छरीरेणात्मनः प्राणयात्रा क्रियतामिति । एवमभिवदन्नेव द्वीपिगोमायुभ्यां विदारितोभयकुक्षिः सद्यः पञ्चत्वमुपगतो भक्षितश्चेति ।

A 75 अतो ऽहं ब्रवीमि । बहवः पण्डिताः क्षुद्रा इति ।

A 76 आख्याते चाख्याने पुनर्दमनकं संजीवको ऽब्रवीत् । भद्र । क्षुद्रपरिवारो ऽयं राजा न शिवायाश्रितानाम् । उक्तं च । वरं गृध्रो राजा हंसपरिवारः । न हंसो राजा गृध्रपरिवारः । परिवाराद्धि दोषाः प्रादुर्भवन्ति । ते ऽलं विनाशाय भवन्तीति । तस्मात्पूर्वमेव परिवारं लिप्सेत । तद्वचनप्रेरितस्तु राजा विचारक्षमो न भवति । उक्तं च ।

भद्रेभप्रतिभो राजा न यथावद्बहुश्रुतः ।
सुहृदामेव बाह्यः स्यात्किं चित्रं यदि विद्विषाम् ॥ ११९ ॥

A 77 सो ऽयं ममोपरि केनापि विकृतः । साधु चेदमुच्यते ।

मृदुना सलिलेन खन्यमाना-
न्यपकृष्यन्ति गिरेरपि स्थलानि ।
उपजापकृतोपघैस्तु तन्त्रैः
किमु चेतांसि मृदूनि मानवानाम् ॥ १२० ॥

A 78 तदेवं गते किमधुना प्राप्तकालम् । अथवा किमन्ययुद्धात् । उक्तं च ।

गुरोरप्यवलिप्तस्य कार्याकार्यमजानतः ।
उत्पथप्रतिपन्नस्य न्याय्यं भवति शासनम् ॥ १२१ ॥

अपि च ।

यान्यज्ञसंघैस्तपसा च लोका-
न्स्वर्गैषिणः पात्रचयैः प्रयान्ति ।
क्षणेन तानप्यतिरिच्य शूराः
प्राणान्सुयुद्धेषु परित्यजन्तः ॥ १२२ ॥
प्राणाश्च कीर्तिश्च परिच्छदश्च
सर्वेण युद्धे परिरक्षणीयाः ।
युद्धे विशिष्टं मरणं नराणां
द्विषद्वशे तिष्ठति को ऽर्थकामः ॥ १२३ ॥
मृतः प्राप्स्यति वा स्वर्गं शत्रुं हत्वापि वा सुखम् ।
उभावपि हि शूराणां गुणावेतौ सुदुर्लभौ ॥ १२४ ॥

A 79 दमनकः । भद्र । अनुपाय एषः । यत्कारणम् ।

शत्रोराक्रन्दमज्ञात्वा वैरमारभते हि यः ।
स पराभवमाप्नोति समुद्र इव टीटिभात् ॥ १२५ ॥

A 80 संजीवकः । कथं चैतत् । दमनकः ।

## ॥ कथा १० ॥

अस्ति । समुद्रतीरैकदेशे टीटिभदंपती प्रतिवसतः स्म । अथ कदाचित्प्रसोष्यमाणया टीटिभ्या भर्ताभिहितः । किंचित्स्थानमन्विष्यताम् । यत्राहं प्रसुवे । असावकथयत् । नन्वेतदेव स्थानं वृद्धिकरम् । अत्रैव प्रसूष्वेति । साब्रवीत् । अलमनेन सापायेन । अवश्यमेव समुद्रजलवेलाप्लवनान्ममापत्यविनाशो भवति । असा-

वाह । भद्रे । न शक्तो महोदधिर्मया सार्धमीदृशं वैरानुबन्धं कर्तुमिति । साब्रवीत् । बहुसदृशं तव समुद्रेण बलम् । कथमात्मनो ज्ञायते सारासारता । उक्तं च ।

दुःखमात्मा परिच्छेत्तुमेवं योग्यो न वेति वा ।
एवंविधस्य विज्ञानं सफलास्तस्य बुद्धयः ॥ १२६ ॥

अपि च ।

मित्राणां हितकामानां यो वाक्यं नाभिनन्दति ।
स कूर्म इव दुर्बुद्धिः काष्ठाद्भ्रष्टो विनश्यति ॥ १२७ ॥

टीटिभः । कथं चैतत् । टीटिभी ।

॥ कथा ११ ॥

अस्ति । कस्मिंश्चित्सरसि कम्बुग्रीवो नाम कच्छपः प्रतिवसति स्म । तस्य द्वौ सुहृदौ विकटसंकटनामानौ हंसौ । अथ कालविपर्यये द्वादशवार्षिक्यनावृष्टिरापतिता । ततस्तयोर्मतिरुत्पन्ना । क्षीणतोयमिदं सरः । अन्यं जलाशयं गच्छाव इति । किं पुनश्चिरोषितं प्रियमित्रं कम्बुग्रीवमामन्त्रयावहे । तथा चानुष्ठिते कच्छपेनाभिहितौ । कस्मान्ममामन्त्रणं क्रियते । यदि तु स्नेहो ऽस्ति । ततो मामप्यस्मान्मृत्युमुखात्त्रातुमर्हथः । यत्कारणम् । युवयोस्तावदाहारवैकल्यं केवलमस्मिन्स्वल्पोदके सरसि । ममात्र तु मरणमेव । तद्विचिन्त्यताम् । आहारसुहृद्वियोगयोः को गरीयान् । ताभ्यामभिहितम् । युक्तमात्थ । एवमेतत् । किं पुनः प्राप्तकालं भवाञ्जानाति । अवश्यं नयाव आवां भवन्तम् । त्वया पुनश्चापलान्न किंचिद्वक्तव्यम् । इमां तु यष्टिं मध्ये दशनैरापीडय । एवमनयैवोद्धृत्य

षष्टिमात्राणि योजनानि महत्सरो भवन्तं नयावः । तत्र सुखं यापयिष्याम इति । एवं च निष्पन्ने तज्जलाश्रयसंनिकृष्टनगरस्योपरिष्टान्नीयमानं दृष्ट्वा । किमिदं शकटचक्रप्रमाणं वियता नीयते । इति जनः सकलकलः संवृत्तः । तच्च श्रुत्वासन्नविनाशः कच्छपो यष्टिं त्यक्त्वाभिहितवान् । अहं कच्छपः । चापलादेष लोकः प्रलपति । इति ब्रुवन्वचनसमकालमेवाश्रयात्परिभ्रष्टो भूमौ निपतितः । मांसार्थिना च लोकेन पातसमकालमेव तीक्ष्णशस्त्रैः खण्डशो विभक्त इति ।

अतो ऽहं ब्रवीमि । मित्राणां हितकामानामिति । पुनश्चाह ।

अनागतविधाता च प्रत्युत्पन्नमतिश्च यः ।
द्वावेतौ सुखमेधेते यद्भविष्यो विनश्यति ॥ १२८ ॥

टीटिभः । कथमेतत् । टीटिभी ।

॥ कथा १२ ॥

अस्ति । कस्मिंश्चिन्महाह्रदे महाकायास्त्रयो मत्स्याः प्रतिवसन्ति स्म । तद्यथा । अनागतविधाता प्रत्युत्पन्नमतिर्यद्भविष्यश्चेति । तत्रानागतविधात्रा तदुदकान्तर्गतेन कदाचित्तत्समीपे मत्स्यवन्धानामतिक्रामतां वचनं श्रुतम् । वहुमत्स्यो ऽयं ह्रदः । अत्र मत्स्यवन्धं कुर्मः । तच्च श्रुत्वानागतविधात्रा चिन्तितम् । अवश्यमेत आगन्तारः । तदहं प्रत्युत्पन्नमतिं यद्भविष्यं च गृहीत्वान्यमच्छिन्नस्रोतस्कं ह्रदं संश्रयामीति । ततस्तावाहूय पृष्टवान्गमनाय । तत्र प्रत्युत्पन्नमतिर्मतिनिवारितो ऽभयचित्तः कथमपि प्रमादान्नानुयातः । यद्भविष्यस्त्वासन्नविनाशस्तद्वचनमनादृत्य निरारम्भ एवासीत् ।

अन्येद्युश्चापयाति ऽनागतविधातरि मत्स्यबन्धैरन्तःस्रोतो निरुध्य प्रक्षिप्तं संवर्तजालम्। अपकृष्टे च जाले तस्मिन्ह्रदे नाप्येकतरो ऽवशिष्टः। एवं गते प्रत्युत्पन्नमतिर्मृतरूपं कृत्वात्मानं जलस्योपरि दर्शितवान्। तैरपि स्वयमेव मृतो महामत्स्य इति कृत्वा परिस्रोतसि स्थापितः। तस्मादुत्प्लुत्यान्यं जलाशयं गतः। यद्भविष्यस्त्वनेकलगुडप्रहारजर्जरितशरीरः पञ्चत्वमुपनीत इति।

अतो ऽहं ब्रवीमि। अनागतविधाता चेति। अथ कदाचित्प्रसूतायां टीटिभ्यां तद्भर्तृजिज्ञासया समुद्रेणापहृतास्ते ऽण्डकाः। पश्यामि तावत्। अयं किमारभत इति। अथ टीटिभी शून्यमपत्यस्थानं दृष्ट्वा परमाविग्नहृदया भर्तारमाह। इदं तदापतितं मन्दभाग्यायाः। असावन्तर्लीनमवहस्य तामाह। ममापि तावत्। भद्रे। दृश्यतां सामर्थ्यमिति।

ततस्तेन पक्षिसमाजं कृत्वा निवेदितं तदपत्यहरणजं दुःखम्। तत्रैकेनाभिहितम्। असमर्था वयं महोदधिविग्रहाय। किं पुनरत्र प्राप्तकालम्। सर्व एव वयमाक्रन्देन गरुत्मन्तमुद्वेजयामः। स एव नो दुःखमपनेष्यति। इत्यवधार्य तत्सकाशं गताः। असावपि देवासुररणनिमित्तमाहूतो विष्णुना गरुडस्तत्स्वयूथ्यव्यसनं दृष्ट्वा मन्युमाजगाम। देवो ऽपि विष्णुस्त्रैकाल्यदर्शनसामर्थ्यात्तस्यान्तर्गतं मत्वा स्वयमेव तत्सकाशमगमत्।

अथ देवं दृष्ट्वा सुतरामाविग्नहृदयो ऽब्रवीत्। युक्तं त्वया नाथेन सता समुद्रापसदान्ममायं परिभव इति। ज्ञात्वा च देवः परिहस्य समुद्रस्येदमुवाच। समर्पयाधुनापत्यानि टीटिभस्येति। अन्यथा त्वामाग्नेयास्त्रप्रतापितमनेकवडवामुखसहस्रपरिक्षीणतोयं सद्यः करिष्यामीति।

एवमुक्तो महोदधिश्चिन्तयामास । समाण्डजेन सर्वनाश एव प्रारब्धः । इति मत्वा प्रणम्य देवं समर्पितवानिति ।

A 81 अतो ऽहं ब्रवीमि । शत्रोराक्रान्दमज्ञात्वेति । अवगतार्थश्च संजीवकस्तमपृच्छत् । वयस्य । कस्तस्य युद्धमार्ग इति । दमनकः । अन्यदासौ स्रस्ताङ्गः शिलातलमाश्रितस्त्वदुन्मुखः प्रतीक्षते । अथ यदि प्रथममेव संगृहीतलाङ्गूलः संयतचतुश्चरणः स्तब्धकर्णश्च तिष्ठेत् । ततस्त्वयावगन्तव्यम् । अयं ममोपरि द्रोग्धुमतिरिति ।

A 82 एवमुक्त्वा करटकसकाशमगमत् । तेन चाभिहितः । किमनुष्ठितं भवता । दमनकः । भिन्नौ तौ तावत्परस्परं फलेन ज्ञास्यसीति । कश्चात्र विस्मयः ।

भिनत्ति सम्यक्प्रहितो भेदः स्थिरमतीनपि ।
भूधरान्संहतशिलान्महानिव रयो ऽम्भसाम् ॥ १२९ ॥

A 83 तत्सर्वथा पुरुषेणात्महितं कर्तव्यम् । आह च ।

यो ऽधीत्य शास्त्रमखिलं शास्त्रार्थं तत्त्वतश्च विज्ञाय ।
आत्महितानि न कुरुते श्रमजननैस्तस्य किं शास्त्रैः ॥ १३० ॥

A 84 करटकः । न किंचिद्यात्महितम् । यस्मात् ।

क्षमयो भस्म विष्ठा वा निष्ठा यस्येयमीदृशी ।
स कायः परपीडाभिर्धार्यतामिति को नयः ॥ १३१ ॥

A 85 दमनकः । नाभिज्ञो ऽसि नीतिशास्त्राणाम् ।

निस्तब्धं हृदयं कृत्वा वाणीं चेक्षुरसोपमाम् ।
दुःखं तत्र न कर्तव्यं हन्यात्पूर्वापकारिणम् ॥ १३२ ॥

A 86 अन्यच्च । निहतो ऽप्यस्माकमुपभोग्यो भविष्यति । तथा हि ।

परस्य पीडां स्वार्थं वा कुर्वाणा न ह्यपण्डितैः ।
लक्ष्यन्ते गूढमतयो वने चतुरको यथा ॥ १३३ ॥

A 87 करटकः । कथमेतत् । दमनकः ।

## ॥ कथा १३ ॥

अस्ति । कस्मिंश्चिद्वनोद्देशे वृकजम्बुककरभसहितो वज्रदन्तो नाम सिंहः प्रतिवसति स्म । कदाचिदसौ वन्यद्विपरदनकोटिपाटितवक्षा एकदेशस्थः क्षुत्क्षामतनुः क्षुधा परिगतांस्तान्सचिवानाह । किंचि-

दन्विष्यतां वने सत्त्वजातम् ' येनाहमेतदवस्थो ऽपि भवतां वृत्तिमापादयिष्यामि । अथ तदाज्ञासमकालमेव ते ऽरण्ये पर्यटन्तो यदा न किंचिदासेदुः ' तदासौ जम्बुकस्तं शङ्कुकर्णनामानं करभं विविक्ते ऽभिहितवान् । किमत्र प्राप्तकालं मन्यते भवान् । स्वामी वज्रदन्तो ऽस्मदीयपर्यटनमनर्थकं श्रुत्वा कदाचिद्विनाशाय प्रवर्तते । तदहं किंचिद्भवतः प्रार्थये ' यदि प्रतीच्छसीति । स आह । किं ममास्ति ' वयस्य ' यत्प्रार्थ्यते । शरीरमपि मे त्वदायत्तम् । यथाभिमतमुपयुज्यतामिति । अथ जम्बुको ऽब्रवीत् । एतदेवात्र कारणम् । अहं ते द्विगुणं शरीरं सिंहसकाशाद्दापयिष्ये । त्वयाप्येवं वयमात्मा च संवर्धिताः स्युरिति । प्रतिपन्नश्चासौ ।

एवमभिधाय सिंहसकाशं गत्वा तमाह । स्वामिन् ' न किंचित्सत्त्वमासादितम् । एष पुनः शङ्कुकर्णो ऽभिधत्ते । बृहत्प्रस्थेन द्विगुणया तुलयोज्जास्यं शरीरं संप्रयच्छामीति । तच्छ्रुत्वा सिंहः प्रहृष्ट आह । एवं क्रियताम् । अथ प्रतिपन्ने शङ्कुकर्णः पपात भूमौ ' खण्डशश्च कृतः ।

ततश्चतुरकस्तं सिंहं रुधिररक्तसर्वगात्रं दृष्ट्वाब्रवीत् । गच्छतु स्वामी स्नानमाचरितुम् ' यावदहं क्रव्यमुखसहितस्तिष्ठामि । गते च तस्मिंश्चतुरकस्तं क्रव्यमुखमाह । भक्षय तावदतः पिशितम् ' यावदसौ स्नातुं गतः । सो ऽब्रवीत् । भक्षयित्वा किमुत्तरं दास्यामि । जम्बुको ऽब्रवीत् । किं तवानेन विचारेण । अहमेतस्य प्रतिवचनं दास्यामि । त्वया पुनर्मम मुखमेवावलोकितव्यमिति । एवमुक्ते ताभ्यां क्रव्यमतिबहु भक्षितम् ।

अत्रान्तरे सिंहः संप्राप्तो यावत्पश्यति सकलं जठरपिशितमुपभुक्तम् ' ततश्चतुरकमाह । माम ' क्व तज्जठरपिशितम् । एवं वदति

सिंहे क्रव्यमुखो मुखं चतुरकस्यावलोकितवान् । चतुरको ऽब्रवीत् । किमधुना मन्मुखमवलोकयसि । स्वामिन् । भक्षितमनेनेति । अथ सिंहः कुलिशखरनखरो भ्रूकुटिलमुखः प्रकटितरोषस्तं हन्तुमैच्छत् । अथासावपि वृको मुखवैवर्ण्यवेपथुव्याप्ततनुरतनुपदविक्षेपः क्षिप्रपलायनपटुरटवीमुद्दिश्य जगाम । सिंहो ऽपि किंचिदनुसृत्य प्रतिनिवृत्तः ।

एतस्मिंश्चान्तरे कथमपि च तत्समीपमथ कश्चित्सार्थवाहो ऽनेन पथायातः । तस्य च सार्थाग्रेसरं कटाहेन गलबद्धेन करभमागच्छन्तं दृष्ट्वा ज्ञातकविषादो जम्बुकस्तं सिंहमाह । देव । विनष्टावावाम् । मा खलु कश्चिज्जनं धारयतु । यावदद्यापि पिशितं नोपभुज्यते । तावद्बृहत्प्रस्थमादाय धनिकाचारेणायं करभकः संप्राप्तः । तत्किमत्र प्राप्तकालम् । गच्छतु स्वामी दिगन्तरमन्यत् । यावदहमेनं लब्धचित्ताभिप्रायं करोमीति । एवमभिहिते सिंहस्तस्मादपयातः । चतुरको ऽपि बहुदिनानि तत्पिशितमुपभुक्तवान् ।

A 88 अतो ऽहं ब्रवीमि । परस्य पीडां स्वार्थं वेति । अपि च ।

अप्रियाण्यपि कुर्वन्तः स्वार्थायोद्यतचेष्टिताः ।
पण्डिता नोपलभ्यन्ते वायसैरिव कोकिलाः ॥ १३४ ॥

इति ।

A 89 एवमभिहितवति दूरादेवात्मशङ्कया तदवस्थं पिङ्गलकमालोक्य संजीवको यथापूर्वाख्याताकारः संवृत्तः । शरीरे यत्नमास्थायोपश्लिष्टस्तत्सकाशमेव चिन्तयामास । साध्विदमुच्यते ।

अन्तर्लीनभुजंगमं गृहमिवान्तःस्थोग्रसिंहं वनं
ग्राहाकीर्णमिवाभिरामकमलच्छायासनाथं सरः ।
कालेनार्यजनापवादपिशुनैः क्षुद्रैरनार्यैः श्रितं
दुःखेन प्रविगाह्यते सचकितं राज्ञां मनः सामयम् ॥ १३५ ॥

A 90 पिङ्गलको ऽपि तथैव व्यक्तलक्षणं तं दृष्ट्वा समुत्पत्य तस्योपरि संनिपतितः । अथ

संजीवको नखकुलिशाग्रावलुञ्चितपृष्ठः स्वशृङ्गाग्रप्रहारेण तस्योदरमुल्लिख्य तस्मात्कथमप्युत्थितः । पुनरपि च तयोर्वृद्धामर्षयोः परस्परं महद्युद्धमभवत् ।

A 91 उभावपि च तौ पुष्पितपलाशतुल्यौ दृष्ट्वा साधिक्षेपं करटको दमनकमाह । धिक् । सर्वमाकुलितं त्वयैतन्मूर्खतया ।

कार्याण्युत्तमदण्डसाहसफलान्यायाससाध्यानि ये
प्रीत्या संशमयन्ति नीतिकुशलाः साम्नैव ते मन्त्रिणः ।
निःसाराल्पफलानि ये त्वविधिना वाञ्छन्ति दण्डोद्यमै-
स्तेषां दुर्नयचेष्टितैर्नरपतेरारोप्यते श्रीस्तुलाम् ॥ १३६ ॥

तत् । मूर्ख ।

साम्नैव हि प्रयोक्तव्यमादौ कार्यं विजानता ।
सामसिद्धा हि विधयो न प्रयान्ति पराभवम् ॥ १३७ ॥
नोन्मयूखेन रत्नेन नातपेन न वह्निना ।
साम्नैव विलयं याति विद्वेषप्रभवं तमः ॥ १३८ ॥
सामादिर्दण्डपर्यन्तो नयो दृष्टश्चतुर्विधः ।
तेषां दण्डस्तु पापीयांस्तस्मात्तं परिवर्जयेत् ॥ १३९ ॥
सामादिदानभेदास्ते किल बुद्धेरनावृतं द्वारम् ।
यस्तु चतुर्थ उपायस्तमाहुरार्याः पुरुषकारम् ॥ १४० ॥
यथाशास्त्रः क्रमो नित्यमुपायश्च यथाक्रमः ।
यथोपायः समारम्भो यथारम्भाश्च संपदः ॥ १४१ ॥
क्लिष्टोपायबलो ऽप्यर्थे विपर्यस्तमनुष्ठितः ।
हतधर्मविमार्गस्थो हन्ति भिन्नक्रमो नयः ॥ १४२ ॥
द्विपाशीविषसिंहाग्निजलानिलविवस्वताम् ।
बलं बलवतां दृष्टमुपायाक्रान्तिनिष्फलम् ॥ १४३ ॥
प्रवृत्ता बहवः शूराः प्रांशवः पृथुवक्षसः ।
चक्षुष्मन्तो ऽप्यबालाश्च किमित्यनुगता गतम् ॥ १४४ ॥

A 92 यदपि च मन्त्रिपुत्रो ऽहमित्यवलेपादतिभूमिं गतो ऽसि । तदप्यात्मविनाशाय ।

यां कृत्वेन्द्रियनिग्रहो ऽपि महतां भावे न संजायते
या बुद्धेर्न विधेयतां प्रकुरुते धर्मे न या वर्तते ।
लोके केवलवाक्यमात्ररचना यां प्राप्य संजायते
या नैवोपशमाय नैव यशसे विद्वत्तया किं तया ॥ १४५ ॥

A 93 शास्त्रे चाभिहितः पञ्चाङ्गो मन्त्रः । तद्यथा । कर्मणामारम्भोपायः । पुरुषद्रव्यसंपत् । देशकालविभागः । विनिपातप्रतीकारः । कार्यसिद्धिश्चेति । सो ऽयमधुना स्वामिनो महानत्ययो वर्तते । तदत्र विनिपातप्रतीकारश्चिन्त्यताम् । अपि च ।

मन्त्रिणां भिन्नसंधाने भिषजां सांनिपातिके ।
कर्मणि व्यज्यते प्रज्ञा स्वस्थे को वा न पण्डितः ॥ १४६ ॥

A 94 तत् । मूर्ख । विपरीतबुद्धिरसि । विद्वन्मानित्वादात्मनो ऽनर्थमुत्पादयसि । साधु चेदमुच्यते ।

ज्ञानं मदोपशमनं खलानां कुरुते मदम् ।
चक्षुःसंस्कारजं तेज उलूकानामिवान्धताम् ॥ १४७ ॥

A 95 तं च कृच्छ्रावस्थागतं स्वामिनं दृष्ट्वा परं विषादमगमत् । आह च । कष्टमिदमापतितं नीचोपदेशात् । अथवा साध्विदमुच्यते ।

नराधिपा नीचमतानुवर्तिनो
बुधोपदिष्टेन न यान्ति वर्त्मना ।
विशन्ति ते दुर्गममार्गनिर्गमं
समस्तसंबाधमनर्थपञ्जरम् ॥ १४८ ॥

A 96 तत् । मूढ । सर्वस्तावत्स्वामिनो गुणवत्परिग्रहं करोति । त्वद्विधेन तु पिशुनवचसा भेदः कृतः स्वामिनो मित्रविशेषतः । कुतः स्वामिनो गुणवत्सहायसंपत् । उक्तं च ।

गुणवानप्यसन्मन्त्री नृपतिर्नाधिगम्यते ।
प्रसन्नस्वादुसलिलो दुष्टग्राहो यथा ह्रदः ॥ १४९ ॥

A 97 त्वं तु प्रायश आत्मविभूत्यर्थं कुविकल्पमेनमिच्छसि । तत् । मूर्ख ।

आकीर्णः शोभते राजा न विविक्तः कथंचन ।
ये तं विविक्तमिच्छन्ति ते तस्य रिपवः स्मृताः ॥ १५० ॥

A 98 त्वं चैतन्नावबुध्यसे । तदसंशयात्कृतिविसंवाद एव प्रजापतेः । कस्मात् ।

परुषे हितमन्वेष्यं तच्चेन्नास्ति विषं हि तत् ।
मधुरे शाठ्यमन्वेष्यं तच्चेन्नास्त्यमृतं हि तत् ॥ १५१ ॥

A 99 यदपि च परसुखोपभोगेर्ष्यया दुःखितो ऽसि । तदपि न साधु लब्धसद्भावेषु मित्रेष्वेवं वर्तितुमिति ।

यः सेर्ष्यः परवित्तेषु रूपे वीर्ये कुले ऽन्वये ।
सुखे सौभाग्यसंस्कारे तस्य व्याधिरनन्तकः ॥ १५२ ॥

शाठ्येन मित्रं कलुषेण धर्मं
परोपतापेन समृद्धिभावम् ।
सुखेन विद्यां परुषेण नारीं
वाञ्छन्ति ये नूनमपण्डितास्ते ॥ १५३ ॥

तथा ।

सैव भृत्यगता संपद्विभूतिः सैव भूपतेः ।
रत्नोद्भासिभिरुद्भूतैः कस्तरंगैर्विनोदधिः ॥ १५४ ॥

A 100 यश्च स्वामिनो लब्धप्रसादो भवति । स नितरां विनीततरो भवतु । उक्तं च ।

यथा यथा प्रसादेन भर्ता भृत्यस्य वर्तते ।
तथा तथा शशाङ्कस्य गतिर्व्योम्न्येव शोभते ॥ १५५ ॥

A 101 तल्लघुधर्मोऽसि । उक्तं च ।

महान्प्रणुन्नो न जहाति धीरतां
न कूलपातैः कलुषो महार्णवः ।
लघोर्विकारस्तनुनापि हेतुना
चलन्ति दर्भाः शिथिलेऽपि मारुते ॥ १५६ ॥

A 102 अथवा स्वामिन एवैष दोषः । यद्युष्मद्विधैर्मन्त्रमात्रव्यपदेशकेवलोपजीविभिः षाड्गुण्योपाये ऽत्यन्तबाह्यैस्त्रिवर्गप्राप्त्यर्थमसमीक्ष्य मन्त्रयते । साधु चोच्यते ।

चित्रस्वादुकथैर्भृत्यैरनायासितकार्मुकैः ।
ये रमन्ते नृपास्तेषां रमन्ते रिपवः श्रिया ॥ १५७ ॥

A 103 तत्सर्वथा विभावितं त्वयात्मीयमन्वयागतं मन्त्रित्वमनेनागमेन । नूनं पितापि त एवंलक्षण एवासीत् । कथं पुनरेतज्ज्ञायते ।

अवश्यं पितुराचारं पुत्रः समनुवर्तते ।
न हि केतकवृक्षस्य भवत्यामलकीफलम् ॥ १५८ ॥

A 104 न च स्वभावगम्भीराणां विदुषां परेणागमरन्ध्रान्तरं लभ्यते बहुना कालेनापि । यदि स्वयमेव चापलादात्मनश्छिद्रं न प्रकाशयेयुः । साधु चेदमुच्यते ।

यत्नादपि कः पश्येच्छिखिनामाहारनिःसरणमार्गम् ।
यदि जलदनादमुदितास्त एव मूढा न नृत्येयुः ॥ १५९ ॥

A 105 तत्सर्वथा । किं तवोपदेशेनापसदस्य । उक्तं च ।

नानाम्यं नाम्यते दारु न शस्त्रं वहते ऽश्मनि ।
सूचीमुखं नु जानीहि यो ऽशिष्यायोपदिष्टवान् ॥ १६० ॥

A 106 दमनकः । कथं चैतत् । करटकः ।

## ॥ कथा १४ ॥

अस्ति कस्मिंश्चिद्वनोद्देशे महान्वानरयूथः । स कदाचिद्धेमन्तकाले ऽसुखासीनो ऽतिविह्वलतया खद्योतं दृष्ट्वाग्निरयमित्याहार्यैः शुष्कतृणपर्णैराच्छाद्य प्रसारितभुजः कक्षकुक्षिवक्षःप्रदेशान्कण्डूयमानः प्रतापमनोरथसुखानि किलानुभवति । तत्रैकः शाखामृगस्तद्गतमना मुहुर्मुहुस्तमेव सुखेनोपाधमत् । अथ सूचीमुखो नाम ******* । तेन वृक्षादवतीर्याभिहितः । मा क्लिशः । नायं वह्निः । खद्योतो ऽयमिति । अथासावधमत्तस्य तद्वचनमवमन्यैव । पुनश्च तेनासकृद्वार्यमाणो नैव शाम्यति । किं बहुना । तावत्तेन कर्णाभ्याशमागत्यागत्य प्रबलमुद्वेजितः । यावत्तेन सहसा गृहीत्वा शिलायामाविध्य विगतप्राणः कृतो ऽसाविति ।

ं च ।

नैर्विभिः

A 107 अतो ऽहं ब्रवीमि । नानाम्यं नाम्यते दार्विति । अथवा ।

किं करिष्यति पाण्डित्यं वस्तुष्वप्रतिपादितम् ।
सपिधाने धृतः कुम्भे प्रदीप इव वेश्मनि ॥ १६१ ॥

तापि त

A 108 तदपजातस्त्वम् । उक्तं च ।

जातः पुत्रो ऽनुजातश्च अभिजातस्तथैव च ।
अपजातश्च लोके ऽस्मिन्मन्तव्याः शास्त्रदृष्टिभिः ॥ १६२ ॥
सामान्यजन्मा जातस्तु अनुजातः पितुः समः ।
अभिजातो ऽधिकस्तस्मादपजातो ऽधमाधमः ॥ १६३ ॥

नेनापि ।

साधु चेदमुच्यते ।

प्रज्ञया वा विसारिण्या यो धनेन बलेन च ।
धुरं वहति गोत्रस्य जननी तेन पुत्रिणी ॥ १६४ ॥
आपातमात्रसौन्दर्यं कुत्र नाम न विद्यते ।
अत्यन्तप्रतिपत्त्या तु दुर्लभो ऽलंकृतो जनः ॥ १६५ ॥

A 109 तत् । मूर्ख । न किंचिदभिवदसि । उक्तं च ।

भिन्नस्वरमुखवर्णः शङ्कितदृष्टिः समुत्पतितदेहः ।
भवति हि पापं कृत्वा स्वकर्मसंत्रासितः पुरुषः ॥ १६६ ॥

सुष्ठु चेदमुच्यते ।

दुष्टबुद्धिरबुद्धिश्च द्वावेतौ धिङ्मतौ मम ।
तनयेनातिपाण्डित्यात्पिता धूमेन मारितः ॥ १६७ ॥

A 110 दमनकः । कथमेतत् । करटकः ।

## ॥ कथा १५ ॥

अस्ति । कस्मिंश्चिदधिष्ठाने वणिक्सुतौ सुहृदौ स्तः । एको दुष्टबुद्धिरपरो धर्मबुद्धिः । तावर्थोपार्जननिमित्तं विशिष्टं देशान्तरं गतौ । अथ तत्र धर्मबुद्धिर्नामैकः सार्थवाहसुतो यः । तेन कस्यचित्साधोः पूर्वस्थापितं कलशिकागतं स्वभाग्यप्रचोदितं रौप्यदीनारसहस्रं प्राप्तम् । स दुष्टबुद्धिना सह संप्रधार्य कृतार्थावावां स्वदेशं गच्छाव इति प्रत्यागतौ । अधिष्ठानसमीपे धर्मबुद्धिनाभिहितम् । दीनारा अर्धविभागेन विभज्यन्ताम् । स्वगृहान्प्रविशावः । अधुना सुहृत्स्वजनादिसमक्षमुज्ज्वलं वत्स्यावः । अथ दुष्टबुद्धिरन्तःकठिनहृदयः स्वार्थसिद्धये तमाह । भद्र । वित्तशेषो यावदावयोः सामान्यः । तावदविच्छिन्नः स्नेहसद्भावः । किंत्वेकमेकं शतं गृहीत्वा प्रविशावः । यत्कारणम् । पुण्यपरीक्षा ह्रासवृद्धिभ्यां भविष्यत्येकार्थता च जनस्पृहणीया ।

तथा चानुष्ठिते शेषं कुत्रचित्सुगुप्तं कृत्वा प्रविष्टौ । अथ तद्वर्षाभ्यन्तरे दुष्टबुद्धिरसद्व्ययव्यसनित्वाद्भाग्यच्छिद्रतया च क्षीणप्रत्यंशः पुनरपि च निधितो धर्मबुद्धिना सहापरशतं विभक्तवान् । तदपि द्वितीयवर्षाभ्यन्तरे तथैव क्षीणम् ।

एवं गते दुष्टबुद्धिश्चिन्तयामास । यदि पुनः शतविभागेन वि-

भजावः । तत्किं मया कृतं भवति । शेषैः षड्भिरपहृतैः समस्तान्येवासादयामि । एवं मत्वैकाकी भूत्वा तामर्थमात्रामपनीय प्रदेशं समीकृत्य मासातिक्रान्ते काले धर्मबुद्धिमभिहितवान् । भद्र । समविभागं शेषवित्तस्य कुर्व इति । प्रतिपन्ने च धर्मबुद्धिना सह गत्वा तमेवोद्देशं खातकर्म कर्तुमारब्धः । खन्यमाने च यदा न दृश्यते । तदा प्रथमतरं धृष्टतया दुष्टबुद्धिः पाषाणेनात्मनः शिरो ऽताडयदब्रवीच्च ससंभ्रमम् । क्व तद्ब्रह्महृदयम् । धर्मबुद्धे । नूनं त्वयापहृतमिति । एवं परस्परशङ्कया विवदमानौ धर्मस्थानमुपागतौ । आवेदिते च तस्मिन्नर्थे ऽवगते ऽव्यक्तव्यवहारदुश्छेदतया संनिरुद्धौ ।

पञ्चरात्राभ्यन्तराच्च दुष्टबुद्धिनाधिकृतानां प्रतिज्ञातम् । साक्षिणो मम सन्त्यत्रव्यवहारदीनाराणामिति । तैस्तु व्यवहारनिवर्तनार्थं पृष्टः । कस्ते साक्षी । दर्शयस्वेति । सो ऽब्रवीत् । यस्यैव वृक्षस्याधस्तात्स्थापितं द्रव्यम् । तेनैव विभावयामीति । अथ ते विस्मयमुपगताः । कथं वनस्पतिर्मन्त्रयिष्यतीति । कृतप्रतिभुवौ स्वगृहं विसर्जितौ ।

अथ दुष्टबुद्धिना स्वगृहं गतेन पिताभिहितः । तात । सद्धस्तगतास्ते पणाः । किंतु वाङ्मात्रावबद्धास्तिष्ठन्ति । अहं तु त्वामद्य रात्रौ वृक्षविवरे ऽस्मिन्स्थापयामि । प्रभाते धर्माधिकृतसमक्षं पृष्टस्त्वं विभावयेति । ततस्तेनाभिहितम् । पुत्र । विनष्टावावाम् । किं कारणम् । अनुपाय एषः । तथा च ।

उपायं चिन्तयेत्प्राज्ञो ह्यपायमपि चिन्तयेत् ।
पश्यतो बकमूर्खस्य नकुलैर्भक्षिताः सुताः ॥ १६८ ॥

सो ऽब्रवीत् । कथमेतत् । असावाह ।

## ॥ कथा १६ ॥

अस्ति । कस्मिंश्चिदर्जुनवृक्षे बकदंपती प्रतिवसतः स्म । तत्र च वृक्षविवरानुसारी महाकायो ऽहिरसंजातक्रियाण्येवापत्यानि भक्षयति स्म । तेन च निर्वेदेन नष्टसंज्ञावाहारक्रियामुत्सृज्य जलाश्रयैकदेशे विमनस्कावासाते । अथ तत्रैकः कुलीरकस्तमाह । माम । किमद्याप्याहारो नानुष्ठीयत इति । बकः । अधृतिपरीतस्य मे कुत आहाराभिलाष इति । यतो ऽसावाह । किंलक्षणसमुत्थाधृतिः । स तु तस्मै यथावृत्तमपत्यभक्षणमाख्यातवान् । कुलीरकस्तु तं समर्थितवान् । अहमुपायं तद्वधाय कथयामि । येयं नकुलवसतिः । एतत्प्रभृत्यविच्छिन्नपरंपरया मत्स्यपिशितं प्रकीर्यताम् । यावत्सर्पवसतिः । ततस्त एवैनं घातयिष्यन्ति । तथा चानुष्ठिते नकुलैः पिशितमार्गानुसारिभिः पूर्ववैरक्रियामनुस्मरद्भिः खण्डशो ऽहिं कुर्वद्भिः पूर्वदृष्टमार्गमाधावद्भिर्बकावासं गत्वा बकस्य शेषापत्यभक्षणं कृतमिति ।

अतो ऽहं ब्रवीमि । उपायं चिन्तयेत्प्राज्ञो ह्यपायमपि चिन्तयेत् । इति ब्रुवन्नपि तेनासौ नीत्वा स्थापितो वृक्षविवरे । अथ प्रभातसमये ऽधिकरणप्रकृतिप्रत्यक्षं धर्मशास्त्रवचनाभिश्रावितेन वनस्पतिना यथाप्रस्तुतमभिहितम् । धर्मबुद्धिनार्थो ऽपहृत इति ।

तच्च श्रुत्वा धर्मबुद्धिश्चिन्तयामास । कथमवाक्पादपो वाचं व्याहरिष्यति । तत्कारणेनात्र भवितव्यम् । सर्वथा बुद्धिसाध्यमेतत् । अथ धर्मस्थानीयानाह । अहो विस्मयः । अद्याप्यविप्लुत एव लोके धर्मबुद्धिरहं विजने ऽस्मिन्वन एकाक्यागम्य तद्द्रव्यं गृहीतवान् । अथापश्यमहिमतिकायमायान्तम् । चिन्तितं च मया ।

कष्टमिदमापतितम् । अभिहितं च । पुनरपि विषया लभ्यन्ते । न तु प्राणाः । पुनरागमिष्यामि । इत्यत्रैव वृक्षमूले ऽवस्थापितम् । अधुनावश्यं राजवशात्समर्पितव्यम् । किंत्वस्मात्स्थानादेकान्ते ऽवस्थानं कुरुध्वम् । यावदहमेनं निधिपालं कृष्णसर्पं पराजयामि ।

इत्युक्त्वाहार्यैः शुष्कदारुपर्णनिचयैर्वृक्षविवरमापूर्याग्निमादीपयितुमारब्धः । दुष्टबुद्धिस्त्वधोमुखमेकेनाक्ष्णा विलोक्य वृक्षविवरान्तर्गतं वणिक्पुत्रं दृष्ट्वा व्यथितमना अभवत् । प्रदीप्ते च वह्नौ समन्तत उज्ज्वलीभूताद्वृक्षविवरात्स्फटिततनुः प्लुष्टकेशः स्रस्तत्वग्यदा जातो वणिक् । तदा भूमौ निपतितः ।

तत्तु महद्वैकारिकं दृष्ट्वा किमिदमिति परं विस्मयमुपगताः । किंचिज्जीवितं च प्रत्यक्षमभिज्ञाय वणिक्पुत्रं पप्रच्छुः । किमिदमध्यवसितं भवतेति । ततो ऽसावब्रवीत् । अनेन दुष्पुत्रेणाहमवस्थामिमां प्रापित इति । एवमभिवदन्पञ्चत्वमुपगतः । अनन्तरं धर्माधिकृतास्तमर्थं ज्ञात्वाभिहितवन्तः । दुष्टबुद्धिरयं पापः शूले ऽवतंस्यतामिति ।

A 111 अतो ऽहं ब्रवीमि । दुष्टबुद्धिरबुद्धिश्चेति । आख्याते चाख्याने पुनः करटको ऽब्रवीत् । मूर्ख । अतिपाण्डित्येन ते दग्धो वंशः । साधु चोच्यते ।

लवणजलान्ता नद्यः स्त्रीभेदान्तानि बन्धुहृदयानि ।
पिशुनजनान्तं गुह्यं दुष्पुत्रान्तानि च कुलानि ॥ १६९ ॥

A 112 अपि च । यस्य तावन्मनुष्यस्यैकस्मिन्नेव मुखे जिह्वाद्वयम् । कस्तस्य विश्वासमियात् ।

द्विजिह्वमुद्वेगकरं क्रूरमेकान्तनिष्ठुरम् ।
खलस्याहेश्च वदनमपकाराय केवलम् ॥ १७० ॥

A 113 तन्ममाप्यनेन चरितेन भयमुत्पन्नम् । कस्मात् ।

मा गाः पिशुनविस्रम्भं ममायं पूर्वसंभृतः ।
चिरकालोपचीर्णो ऽपि दशत्येव भुजंगमः ॥ १७१ ॥

A 114 कथं चाजस्रं परपराभवग्रहणेन नोद्विजसि । अथवा स्वभाव एषः ।

परदोषकथाविचक्षणः
स्वगुणाख्यापननित्यतत्परः ।
स्वयमेव हि वेत्ति पण्डितः
कुलशीलं कथयत्यपण्डितः ॥ १७२ ॥

अपि च ।

नूनं तस्यास्यपुटे जिह्वा वज्रोपमा मनुष्यस्य ।
यस्य परदोषकथने सद्यो न विदीर्यते शतधा ॥ १७३ ॥

A 115 तत्सर्वथा परीक्ष्य परस्वभावं मनुष्येण सङ्गः कार्यः । उक्तं च ।

विद्वानृजुरभिगम्यो विदुषि शठे चाप्रमादिना भाव्यम् ।
ऋजुमूर्खस्त्वनुकम्प्यो मूर्खशठः सर्वथा वर्ज्यः ॥ १७४ ॥

A 116 तन्न केवलमात्मीयवंशविनाशस्त्वया प्रयतितः । अधुना स्वामिनो ऽपि व्यभिचरितम् । तद्यतस्त्वं स्वं स्वामिनमिमामवस्थां प्रापयसि । तस्य तवान्यस्तृणभूतः । कस्मात् ।

तुलां लोहसहस्रस्य खादते यत्र मूषकः ।
गजं तत्र हरेच्छ्येनो दारकं को ऽत्र विस्मयः ॥ १७५ ॥

A 117 दमनकः । कथमेतत् । करटकः ।

## ॥ कथा १७ ॥

अस्ति कस्मिंश्चिदधिष्ठाने क्षीणबान्धवो वणिक्सुतः । स देशान्तरमर्थोपार्जननिमित्तं प्रस्थितः । तस्य तुला लोहसहस्रकृता विद्यते । सो ऽन्यस्मिन्वणिक्पुत्रके तां निक्षिप्य देशान्तरमर्थोपार्जनाय प्रायात् । क्षीणभाग्यत्वाच्च तेन बहुनापि कालेन न किंचिदासादितम् । प्रत्यागतश्च तां तुलां तस्मात्प्रार्थितवान् । तेनोक्तं च । सा मूषकैर्भक्षितेति । अथासावचिन्तयत् । विस्मयनीयमेतत् । कथं लोहसहस्रमयीं तुलां मूषका भक्षयिष्यन्तीति । अन्तर्लीनमवहस्याब्रवीत् । अवश्यमेतदेवम् । यत्कारणम् । वृष्यं स्वादु मृदु च लोहं कथमाखवो न भक्षयिष्यन्ति । इति प्रतिपन्नवाक् ।

वैरूप्योपहतास्य कान्तवपुषं वृत्तिस्थितं दुःस्थिता
नानाशास्त्रविशारदं च पुरुषं निन्दन्ति मूर्खाः सदा ॥ १७७ ॥

A 120 अथवा तस्य युक्तमुपदेष्टुम् ' यः सकृदुक्तं गृह्णाति । त्वं पाषाण इव निश्चेष्टः । किं तवोपदिष्टेन । मूर्ख ' त्वया सह संवासो ऽपि न श्रेयान् । अन्यथा कदाचित्त्वत्संपर्कादस्माकमप्यनर्थः स्यात् । उक्तं च ।

लभते पुरुषस्तांस्तान्गुणदोषान्साध्वसाधुसंपर्कात् ।
नानादेशविचारी पवन इव शुभाशुभान्गन्धान् ॥ १७८ ॥

अथवा ।

भेदनामात्रकुशलः सौहार्दानां विनाशनः ।
प्रमाणं दमनो यत्र न तत्कार्यं शुभं भवेत् ॥ १७९ ॥

A 121 अपि च । पिशुनानां न किंचित्स्वार्थमुपपद्यते विनाशादृते । अन्त्यास्वप्यवस्थासु नैवाकार्यं व्यवस्यन्ति साधवः कर्तुम् । तथा हि ।

यदकार्यमकार्यमेव त-
न्न बुधस्तत्र मतिं प्रयोजयेत् ।
परयापि तृषा पिपासितै-
र्न हि रथ्यागतमम्बु पीयते ॥ १८० ॥

A 122 इत्युक्त्वा तत्सकाशादपेतः करटकः ।

A 123 अथ व्यापाद्य संजीवकं पिङ्गलक एकान्ते ऽसृग्दिग्धं पाणिं प्रमृज्य चेदमब्रवीत् । कष्टम् । महदिदमकृत्यं मया कृतं द्वितीयमिव शरीरं संजीवकं व्यापादयता । साधु चेदमुच्यते ।

भूम्येकदेशस्य गुणान्वितस्य
भृत्यस्य वा बुद्धिमतः प्रणाशे ।
भृत्यप्रणाशे मरणं नृपाणां
नष्टापि भूमिः सुलभा न भृत्यः ॥ १८१ ॥

A 124 तमेवमधृतिपरीतमभिवदन्तं पिङ्गलकं श्रुत्वा शनैरुपश्लिष्य दमनको ऽब्रवीत् । कतर एष न्यायो नयो वा ' यत्सपत्नं हत्वाधृतिः क्रियते । उक्तं च ।

पिता वा यदि वा भ्राता भार्या पुत्रो ऽथवा सुहृत् ।
प्राणद्रोहे वर्तमाना हन्तव्या भूतिमिच्छता ॥ १८२ ॥
राजा घृणी ब्राह्मणः सर्वभक्षः
स्त्री चावशा दुष्प्रकृतिः सहायः ।
प्रेष्यः प्रतीपो ऽधिकृतः प्रमादी
सर्वे त्याज्या यश्च कृतं न वेत्ति ॥ १८३ ॥



## ॥ मित्रप्राप्तिर्नाम द्वितीयं तन्त्रम् ॥

A 127 अतः परमिदमारभ्यते मित्रप्राप्तिर्नाम द्वितीयं तन्त्रम् । अत्रायमाद्यः श्लोकः ।

असाधना वित्तहीना बुद्धिमन्तः सुहृन्मताः ।
साधयन्त्याशु कार्याणि काककूर्ममृगाखुवत् ॥ १ ॥

A 128 एवमाख्यायते ।

दाक्षिणात्ये जनपदे मिहिलारोप्यं नाम नगरम् । तस्य नातिदूरे महास्कन्धशाखाविटपः शल्मलिवृक्षः । तत्र च लघुपतनको नाम वायसः प्रतिवसति स्म । स कदाचित्प्रभातसमय आहारार्थमुच्चलितो ऽपश्यत्तदधिष्ठानवासिनमुग्ररूपं स्फुटितकरचरणमुद्बद्धपिण्डिकं रूक्षपरुषशरीरमतिरक्तलोचनं जाललगुडपाणिं पक्षिबन्धम् । किं बहुना । द्वितीयमिव कालं तद्वृक्षाभ्याशमुपगतम् । दृष्ट्वाचिन्तयच्छङ्कितमनाः । किमयं पापश्चिकीर्षति । किं ममैवानर्थाय । आहो स्वित्कश्चिदन्यो ऽस्याध्यवसायः । इति कौतुकपरो ऽवस्थितः ।

A 129 असावपि दुष्टात्मा तद्वृक्षसमीपे जालं वितत्याहार्यैर्धान्यकणैरवकीर्यैकान्ते ऽदृश्यो ऽवस्थितः । अथ तत्र चित्रग्रीवो नाम कपोतराजः कपोतसहस्रपरिवारो नभस्यतिक्रामन्दैवात्तान्कणान्साधयति स्म । आहारनिमित्ताक्षिप्तचित्तश्च मोहाज्जालमनुसृतः सानुचरः संनिपातसमकालमेवाशेषो बद्धः स्नायुपाशैः । लुब्धको ऽपि हृष्टमना लगुडमुद्यम्याद्य पक्षिणो बहवः समुत्पन्नाः । शीघ्रतरं गच्छामीत्यचिन्तयत् । चित्रग्रीवो ऽपि सानुचरः पाशबन्धव्याकुलीकृतमना इतश्चेतः परिभ्रमञ्चक्रारूढ इव तैराकृष्यमाणे जाले विचित्रचञ्चुचरणैः कृष्यमाणः सहायैस्तानब्रवीत् । अनुपाय एषः । तत्र जरत्कपोतस्तं राजानमाह । अत्रोपाय एषः । एकचित्ता भूत्वोत्पतत । अन्यथेदमशक्यं जालमपहर्तुमिति । तथा च तैर्जीवितार्थिभिरनुष्ठितम् । इषुक्षेपमात्रं नभसो मार्गमुत्सृज्य वियति विगतभया वितानबन्धं कृत्वा प्रस्थिताः । लुब्धको ऽपि तज्जालं पक्षिभिर्नीयमानं दृष्ट्वाचिन्तयत् । अभूतपूर्वमिदम् । यन्मम पक्षिणो जालमपहरन्तीति । अथवा ।

संहतास्तु हरन्तीमे मम जालं विहंगमाः ।
यदा तु विवदिष्यन्ति वशमेष्यन्ति मे तदा ॥ २ ॥

A 130 चित्रग्रीवो ऽपि तं क्रूरं खगणपरिवृतं दृष्ट्वानुयान्तं शनैर्गन्तुमारब्धः ।

A 131 अथ तत्र चित्रग्रीवसुचरितप्रत्यक्षविस्मितमना लघुपतनको ऽप्याहारचिन्तामुत्सृज्य कौतुकपरः कपोतशिविरमेवानुसृतो ऽचिन्तयच्च । कथमयं दुरात्मा कपोतान्प्रति करिष्यतीति । अथ लुब्धको ऽभिवर्धितं कपोतचक्रं दृष्ट्वा वद्धाशो ऽनुधावन्पुनरब्रवीत् ।

अविक्रियां चैव समाश्रिताः समं
हरन्ति जालं मम पक्षिणो ह्यमी ।
विवादमेष्यन्ति परस्परं यदा
समागमिष्यन्ति च मद्वशं तदा ॥ 3 ॥

A 132 चित्रग्रीवो ऽपि तदभिप्रायं ज्ञात्वा सहायानाह । अयं दुरात्मा वद्धाशो ऽनुधावति लुब्धकः । अतो ऽस्माकमदर्शनमेव श्रेयः । यत्कारणम् ' अयं दुरात्मा मन्यते । विवादमेष्यन्ति यदा ' तदा मे वश्या भवन्तीति । अथान्तर्हिता जालं गृहीत्वा पक्षिणः । अथ हीनाशो दासः प्रतिनिवृत्तः ।

A 133 तं च तथाविधं हीनाशं दृष्ट्वा चित्रग्रीवः पुनस्तानब्रवीत् । सो ऽयमस्मच्चिकीर्षितं ज्ञात्वा प्रतिनिवृत्तो विहताशो भवति ' यतो ऽस्माकमपि प्रतिनिवृत्य गन्तुं श्रेयो मिहिलारोप्यमेव । यत्कारणम् ' मम तत्र प्रियसुहृत्कश्चिद्धिरण्यो नाम मूषकः प्रतिवसति । तत्सकाशमविलम्बितं गच्छामः । सो ऽमीषां पाशानां छेदसमर्थो भवति । नान्यो ऽस्माकमापदो मोक्षयितेति । तथा चानुष्ठिते हिरण्यं दिदृक्षवः संनिपतितास्तमुद्देशम् ।

अनागतं भयं दृष्ट्वा नीतिशास्त्रविशारदः ।
अवसन्मूषकस्तत्र कृत्वा शतमुखं विलम् ॥ ४ ॥

A 134 पक्षपातशब्दचकितहृदयो हिरण्यो बिडालपदमात्रं मार्गमुत्सृज्य किमिदमिति निरीक्षितुमारब्धः ।

A 135 चित्रग्रीवो ऽपि विवरद्वार्यवस्थित एवमाह । भद्र हिरण्य ' इतस्तावदिति । तच्च श्रुत्वान्तर्गत एव हिरण्यो ऽब्रवीत् । को भवानिति । असावपि चित्रग्रीवो ऽहमित्याख्यातवान् । एवमाख्याते च तत्त्वार्थोपलब्धिप्रहर्षरोमाञ्चितगात्रः स ससंभ्रमं निर्गत्यापश्यत्पाशबन्धव्याकुलीकृतं सपरिवारं चित्रग्रीवम् ' आह च सविषादम् । भद्र ' किमिदम् । कथय कथयेति । चित्रग्रीवः । वयस्य ' विद्वानसि । किमनेन पृष्टेन । अपि च ।

यस्माच्च येन च यदा च यथा च यच्च
यावच्च यत्र च शुभाशुभमात्मकर्म ।
तस्माच्च तेन च तदा च तथा च तच्च
तावच्च तत्र च कृतान्तवशादुपैति ॥ ५ ॥

पुनरप्याह ।

नैवान्तरिक्षे न समुद्रमध्ये
न पर्वतानां विवरप्रदेशे ।
नास्तीह पृथ्व्यां स हि को ऽपि देशो
यत्र स्थितं न प्रसहेत कर्म ॥ ६ ॥

A 136 हिरण्य आह । एवमेतत् ।

सदृशाद्योजनशतात्पश्यति ह्यामिषं खगः ।
स एव काले संप्राप्ते पाशबन्धं न पश्यति ॥ ७ ॥
शशिदिवाकरयोर्ग्रहपीडनं
गजभुजंगमयोरपि बन्धनम् ।
मतिमतां च निरीक्ष्य दरिद्रतां
विधिरहो बलवानिति मे मतिः ॥ ८ ॥

साधु चेदमुच्यते ।

व्योमैकान्तरचारिणो ऽपि विहगाः संप्राप्नुवन्त्यापदं
बध्यन्ते बडिशैरगाधसलिलान्मीनाः समुद्रादपि ।
दुर्नीतं किमिहास्ति किं सुचरितं कः स्थानलाभे गुणः
कालो हि व्यसनप्रसारितभुजो गृह्णाति दूरादपि ॥ ९ ॥

पुनरप्याह ।

गत्वापि दूरमाकाशं पञ्चाभिज्ञा महर्षयः ।
गन्तुं तत्र न शक्तास्ते यत्र मृत्योरगोचरः ॥ १० ॥
पृथिवी दह्यते यत्र मेरुश्चापि विशीर्यते ।
शुष्यते सागरजलं शरीरे तत्र का कथा ॥ ११ ॥
वज्रसारशरीराणां देवानां यद्यनित्यता ।
कदलीगर्भतुच्छेषु का चिन्तान्येषु देहिषु ॥ १२ ॥
मृत्योरत्युग्रदंष्ट्रस्य प्रमत्ताः खल्विमाः प्रजाः ।
वने जिघांसोः सिंहस्य मृगी काभिमुखं स्थिता ॥ १३ ॥
सर्वोपायैर्यदा नास्ति मृत्योरन्या प्रतिक्रिया ।
धृतिमालम्ब्य यत्नेन स्वचित्तं परिभाव्यताम् ॥ १४ ॥
कश्चित्तावत्त्वया दृष्टः श्रुतो वा शङ्कितो ऽपि वा ।
क्षितौ वा यदि वा स्वर्गे यस्य मृत्युर्न विद्यते ॥ १५ ॥

A 137 एवमुक्त्वा चित्रग्रीवस्य पाशांश्छेत्तुमारब्धः । तेनापि निषिद्धो मा तावन्मम पाशाः । किंतु प्रथमं मत्परिजनस्य छिद्यन्तामिति । एवं द्वितीये तृतीये हिरण्यः

कुपितो ऽब्रवीत् । भद्र । कथं स्वव्यसनानपेक्षां कृत्वा परस्य व्यसनमोक्षः क्रियत इति । सो ऽब्रवीत् । भद्र । न मन्युः कार्यः । श्रूयतां तावत् । अयं किलाश्रयणीयगुणोपेत इति कृत्वामी स्वामिनं परित्यज्य मच्चक्रमनुप्रविष्टाः । यतो ऽस्य पञ्चरात्रम् । अस्य दशरात्रम् । मासो ऽस्य । अस्य मासाधिकः संवत्सरो गतः प्रविष्टस्येति । तद्यावदमुं भवान्मम पाशं न छिनत्ति । तावदस्यान्तमेषां छेत्स्यसि । आदौ च मम छिन्ने कदाचिद्भवान्क्लममियात् । तत्साधुनयत एवं मयाभिहितम् । तच्छ्रुत्वा हिरण्य आह । मया तावद्भवत उपधापरीक्षेयं कृता । साध्वाश्रयणीयगुणोपेतो ऽसि ।

कारुण्यं संविभागश्च यथा भृत्येषु वर्तते ।
चित्तेनानेन शक्तस्त्वं त्रैलोक्यमपि शासितुम् ॥ १६ ॥

A 138 तत् । भद्र । अशेषमधुना पाशच्छेदं कृतमवधारय । तथा चानुष्ठितवान् । मुक्तबन्धनस्तु चित्रग्रीवो हिरण्यमापृच्छ्य क्ष्माप्युत्पत्य प्रायात् । हिरण्यो ऽपि स्वं दुर्गं प्रविष्टः ।

A 139 लघुपतनको ऽप्यादितः प्रभृत्येव तद्दृष्ट्वा तत्समीपपादपावस्थितो ऽचिन्तयत् । अहो । महदिदमाश्चर्यं हिरण्याच्चित्रग्रीवमोक्षणम् । *तन्ममापि युक्तं हिरण्येन चित्रग्रीववत्प्रीतिकरणम्* । येनास्माकमीदृशानि पाशबन्धनव्यसनान्युत्पद्यन्त इति । एवं संप्रधार्य तस्मात्पादपादवरुह्य विवरद्वारमासाद्य पूर्वोपलब्धनामानं हिरण्यं व्याहृतवान् । भद्र हिरण्य । इतस्तावदिति । तच्छ्रुत्वा हिरण्यो ऽचिन्तयत् । किमद्यापि कश्चित्सावशेषपाशबन्ध एवावतिष्ठते । आह च । को भवान् । असावपि लघुपतनको ऽहमित्याख्यातवान् । ज्ञात्वा पुनर्वायस इति । हिरण्यो ऽन्तर्गत एवापश्यत् । भिन्नाञ्जनचूर्णभृङ्गाङ्गारराशिस्त्रीकेशपाशपरभृततुल्यच्छविं तं दरीद्वारगतं वायसं दृष्ट्वाब्रवीत् । अपगम्यतामस्मात्स्थानादिति । वायसः । श्रूयतां तावत् । अहं चित्रग्रीवमोक्षणं दृष्ट्वा बहुमनोरथमिच्छामि भवता सह मित्रत्वमिति । यत्कारणम् । अस्माकमीदृशानि व्यसनान्युत्पद्यन्त इति । तानि तु त्वया नाथेनायत्नमपासनशक्यानि भवन्ति । किं बहुना ।

गुणा अनुक्ता अपि ते स्वयं यान्ति प्रकाशताम् ।
छाद्यमानापि सौगन्ध्यमुद्वमत्येव मालती ॥ १७ ॥

A 140 तच्छ्रुत्वा हिरण्यो ऽब्रवीत् । भद्र । स्वभावचपलस्त्वम् । उक्तं च ।

आत्मनश्चपलो नास्ति कुतो ऽन्येषां भविष्यति ।
तस्मात्सर्वाणि कार्याणि चपलो हन्त्यसंशयम् ॥ १८ ॥

अपि च ।

उत्पथेन क्वचिद्याति क्वचिन्मार्गेण गच्छति ।
मुहुरुष्णो मुहुः शीतश्चपलश्चपलायते ॥ १९ ॥

A 141 तदपगम्यतामस्माद्दुर्गोपरोधस्थानात् ।

A 142 सो ऽब्रवीत् । भद्र । चपलो न चपल इति । किमनेन निष्ठुरवचनेन । निश्चयो ऽयमवश्यं भवता सह मैत्री कर्तव्येति । हिरण्यो विहस्याब्रवीत् । भद्र ।

यदशक्यं न तच्छक्यं यच्छक्यं शक्यमेव तत् ।
नोदके शकटं याति न नावा गम्यते स्थले ॥ २० ॥
यद्येन युज्यते लोके बुधस्तत्तेन योजयेत् ।
अहमन्नं भवान्भोक्ता कथं प्रीतिर्भविष्यति ॥ २१ ॥

A 143 वायसः ।

भक्षितेनापि भवता नाहारो मम पुष्कलः ।
त्वयि जीवति जीवेयं चित्रग्रीव इवानघ ॥ २२ ॥

A 144 तेन हि न युक्तं प्रार्थयमाने मयि भवतो ऽनादरं कर्तुम् । तिरश्चामपि समयकारणेन नाविश्वासमुपयान्ति सन्तः । कथम् ।

साधोः प्रकुपितस्यापि न मनो याति विक्रियाम् ।
न हि तापयितुं शक्यं समुद्राम्भस्तृणोल्कया ॥ २३ ॥

अपि च ।

खण्डितः कुट्टितश्चैव पुनरेव द्रवीकृतः ।
तथापि लवणः स्वादुर्गोत्रजे विकृतिः कुतः ॥ २४ ॥

A 145 ततो विहस्य हिरण्यो ऽब्रवीत् । भद्र । इह तावल्लोके द्वे वैरे शास्त्रदृष्टे । एकाङ्गवैरमुभयवैरं च । वायसः । कस्तयोर्विशेषः । हिरण्यः । *यो विहन्यात्परस्परम् । अन्यो ऽन्येन भक्ष्यते । परस्परापकारात्तदुभयवैरमिति ।* यः पूर्वमेव हत्वा भक्षयति । न चासौ तस्यापकरोति न हिनस्ति न भक्षयति । तदेकाङ्गवैरम् । अकस्मात् । यथा । अश्वमहिषं मार्जारमूषकमहिनकुलम् । किमश्वो महिषस्य । सर्पो वा बभ्रोः । मूषको वा मार्जारस्यापकरोति ।

A 146 तत्सर्वथा किमशक्येन समयकारणेन । उक्तं च ।

शत्रुणापि न संदध्यात्सुश्लिष्टेनापि संधिना ।
अतप्तमपि पानीयं शमयत्येव पावकम् ॥ २५ ॥

अपि च ।

सुहृदयमिति दुर्जने ऽस्ति काशा
वज्र कृतमस्य मयेति लुप्तमेतत् ।
स्वजन इति पुराणशब्द एषो
धनलवमात्रनिबन्धनो हि लोकः ॥ २६ ॥

अन्यच्च ।

दृष्टो वा सुकृतशतोपलालितो वा
श्लिष्टो वा व्यसनशताभिरक्षितो वा ।
ह्रीःशील्याज्जनयति नैव जात्वसाधु-
र्विस्रम्भं भुजग इवांसमध्यसुप्तः ॥ २७ ॥

महताप्यर्थसारेण यो विश्वसिति शत्रुषु ।
भार्यासु च विरक्तासु तदन्तं तस्य जीवितम् ॥ २८ ॥

सकृद्दुष्टं तु यो मित्रं पुनः संधातुमिच्छति ।
स मृत्युमुपगृह्णाति गर्भमश्वतरी यथा ॥ २९ ॥

अपराधो न मे ऽस्तीति नैतद्विश्वासकारणम् ।
विद्यते हि नृशंसेभ्यो भयं गुणवतामपि ॥ ३० ॥

A 147 वायसः । श्रुतं मयैतत् । किंतु सर्वथाहं त्वामात्मीकरोमि । शक्यं चैतत् । तथा हि ।

द्रवत्वात्सर्वलोहानां निमित्तान्मृगपक्षिणाम् ।
भयाल्लोभाच्च मूर्खाणां संगतं दर्शनात्सताम् ॥ ३१ ॥

अन्यच्च ।

मृद्घटवत्सुखभेद्यो दुःसंधानश्च दुर्जनो भवति ।
सुजनश्च कनकघटवद्दुर्भेद्यः संधनीयश्च ॥ ३२ ॥

A 148 यद्येतदेवं स्यात् । तथा त्वया समयो मे युक्त एव स्यात् । अन्यथास्मिन्नेव स्थाने प्राणपरित्यागं करिष्यामीति ।

A 149 तच्छ्रुत्वा हिरण्यो ऽब्रवीत् । प्रत्यायितो ऽहं भवता । तथा नाम । किंतु मा किल भवान्मंस्यते । अज्ञो ऽयम् । मया वुद्धिकौशलेनाभिहितमिति । यत एतन्मया भवतः प्रदर्शितम् । अधुना त्वदङ्कगतं मे शिरः । यद्येवं मां विनाशयसि । तथाप्यर्चित इति । एवमुक्त्वा निर्गन्तुमारब्धः ।

A 150 ईषच्च निर्गतः पुनरवस्थितः । वायसेनाभिहितः । भद्र । किमद्यापि मय्योपर्यविश्वासकारणम् । हिरण्यः । अस्ति किंचिद्वक्तव्यम् । इह हि चित्तवित्ताभ्यां लोको यापयति । तयोर्वैरम् । चित्तवित्ताभ्यां संगमो वृद्धये । न पुनर्वित्तं प्रभूतमपि । विनाशाय कश्चिल्लावकेभ्यस्तिलान्प्रयच्छति । मत्स्येभ्यो जालम् । किमसावुपकाराय । न मूलोच्छित्तये । तथा मत्स्यमपि वडिशेनापकृष्य छित्त्वा चर्मापनयनशेषाङ्गपरिरक्षणार्थमसौ तस्यारम्भः । साधु चेदमुच्यते ।

नास्ति जात्या रिपुर्नाम मित्रं नाम न विद्यते ।
सामर्थ्ययोगाज्जायन्ते मित्राणि रिपवस्तथा ॥ ३३ ॥

वाध्यन्ते न ह्यविश्वस्ता दुर्वला वलवत्तरैः ।
विश्वस्ताश्चाशु वाध्यन्ते वलवन्तो ऽपि दुर्वलैः ॥ ३४ ॥

तथा ।

नोपकारः सुहृच्चिह्नं नापकारो ऽरिलक्षणम् ।
प्रदुष्टमप्रदुष्टं वा चित्तमेवात्र कारणम् ॥ ३५ ॥

A 151 स उपलब्धचित्तो ऽहमधुना भवतो नापायं पश्यामि । उक्तं च ।

आजीवितान्ताः प्रणयाः कोपाश्च क्षणभङ्गुराः ।
परित्यागाश्च निःसङ्गा न भवन्ति महात्मनाम् ॥ ३६ ॥

A 152 मया किलैवं ज्ञातम् । यदि युष्मदन्यन्मित्रं भविष्यति । स मां विश्वासोपगतं विनाशयिष्यति । वायसः ।

गुणवन्मित्रनाशेन यन्मित्रमुपलभ्यते ।
शालिस्तम्बविरोद्धारं श्यामाकमिव तत्त्यजेत् ॥ ३७ ॥

A 153 तच्च श्रुत्वा त्वरिततरं निर्गत्य सादरं परस्परं समागतौ ।

प्रीतिं निरन्तरां कृत्वा दुर्भिदां नखमांसवत् ।
मूषको वायसश्चैव गतावेकान्तमित्रताम् ॥ ३८ ॥

A 154 सुमुहूर्तं च स्थित्वा लघुपतनको हिरण्यमाह । प्रविशतु भवान्स्वभवनम् । अहमप्याहारार्थं गच्छामीति । एवमुक्त्वा प्रायात् ।

A 155 किंचिच्च वनगहनं प्रविश्यापश्यच्छार्दूलव्यापादितं वनमहिषम् । तत्रापतत् । प्रकामाहारं कृत्वा सुपुष्पितकिंशुकस्तवकतुल्यां मांसपेशीमादाय हिरण्यान्तिकमागतः । तं चाहूयाब्रवीत् । भक्ष्यतामिदं मयोपनीतमभिनवं पिशितमिति । तस्यापि तेन हिरण्येनादृतेन भूत्वा श्यामाकतण्डुलानां निस्तुषाणां सुमहान्पुञ्जः कृतः । आह च । सखे । भक्ष्यन्तामिमे स्वसामर्थ्येन मयोपनीतास्तण्डुला इति । ततस्तौ च परस्परं सुतृप्तावपि स्नेहसूचनार्थं भक्षितवन्तौ । प्रतिदिनं च लोकातीतस्नेहपुरःसरः कालो ऽतिवर्तते ।

A 156 अथ कदाचिल्लघुपतनक आगत्य हिरण्यमपृच्छत् । भद्र हिरण्य । अहमस्मात्स्थानादन्यत्स्थानं गच्छामि । हिरण्यः । वयस्य । किं निमित्तम् । वायसः । निर्वेदात् । हिरण्यः । कस्ते निर्वेदः । वायसः । प्रतिदिनं मे चञ्चुभरणमुत्पद्यते । सततं दृष्टपाशबन्धनप्रत्यवायाः पतत्रिणो वित्रस्यन्ते । तदलमीदृशेन प्राणधारणेन । अतो विशिष्टस्थानं गत्वा विपुलह्रदमुपाश्रितो मन्थरको नाम जाह्नवीतीरे मम प्रियमित्रं कच्छपः प्रतिवसति । तमाश्रित्य येन केनचिद्बकमत्स्यमण्डूकावयवादिना समुत्पन्नाहारः कालमनुद्वेगेन सुखं यापयिष्यामि । अलमनेनाविशिष्टेनात्ययिकस्थानेनेति । तच्छ्रुत्वा हिरण्यो ऽब्रवीत् । अहमपि भवता सहागमिष्यामि । वायसः । किं भवतो ऽपि निर्वेदकारणम् । हिरण्यः । अस्ति निर्वेदकारणम् । किं च । बहु वक्तव्यम् ।

तत्रैव च तत्कथयिष्यामीति । वचनसमकालमेव लघुपतनकेन चञ्च्वा परिगृह्याशु महाह्रदं प्रापितः ।

A 157 अथ वायसमायान्तं दृष्ट्वा मन्थरको ऽप्यात्मशङ्कया पुलिनादुत्प्लुत्याम्भसि निमग्नः ।

अब्दुर्गे चैवमास्ते तु न भयं विद्यते क्वचित् ।
समुद्रकुक्षिमासाद्य विश्वस्तो मन्थरस्तथा ॥ ३९ ॥
वायसेन तु संगृह्य नीतो ऽसौ तत्र मूषकः ।
एकारिमित्रतां तेन गतः सर्वत्र वस्तुनि ॥ ४० ॥
परीक्षमाणस्तन्मित्रं मन्थरो नाम कच्छपः ।
पूर्वोपकारिणं हृद्यं सर्वकार्यार्थसाधकम् ॥ ४१ ॥
अब्दुर्गमतुलं लब्ध्वा तथापि चकितो ऽभवत् ।
प्रवृत्तकार्यविस्रम्भो मन्थरो देशकालवित् ॥ ४२ ॥

A 158 लघुपतनको ऽप्युदकसंघट्टक्षुभितहृदयः किमिदमिति वितर्क्य हिरण्यं पुनः पुलिने ऽवस्थाप्य विपुलं वृक्षमधिरूढो जिज्ञासुः । तत्रस्थश्चाब्रवीत् । * * * * * * * *

A 159 वयस्य । मयाद्यो जातु न भवानक्षमिति सामान्यदर्शनात्तर्कितम् । न विना जनसंसर्गं वायसानामिहागम इति । अतो ऽहमुपायासक्तः । तन्नान्यथावगन्तव्यम् । पुनरप्याह । अपि भवतः शिवम् । कुतस्त्वं कथं चैतद्विजनं वनमागतो ऽसि । त्वं तावदजस्रं जनपदमध्यजीवी । कथमस्मिन्विजने वने वृत्तिं करिष्यसि । अथ सो ऽपि तस्य यथावस्थितमात्मनो निर्वेदकारणमाखुमाख्यातवान् । अवगतार्थश्च मन्थरः पुनरपृच्छत् । भवतो विधुरमिदमाश्चर्यं पश्यामि । कथमाखुना सह संगतं भवतः ।

A 160 वायसो ऽब्रवीत् । यस्य जिह्वासहस्रं स्यात् । सो ऽस्य दीर्घायुषो गुणविस्तरं यथावस्थितं ब्रूयात् । साधु चोच्यते ।

आजीवितान्ताः प्रणयाः कोपाश्च क्षणभङ्गुराः ।
परित्यागाश्च निःसङ्गा न भवन्ति महात्मनाम् ॥ ४३ ॥

A 161 इति यथावृत्तं तस्मै चित्रग्रीवविमोक्षणमाख्यातवान् । आत्मनश्च तेन सह संगतम् । मन्थरो ऽपि हिरण्यगुणमाहात्म्यश्रवणविस्मितो हिरण्यमपृच्छत् । भवतो ऽपि जनपदमाश्रित्याजस्रं वर्तते प्राणयात्रा । अथ केन निर्वेदेन केन वा परिभवकारणेन स्वदेशमित्रबन्धुकलत्रादिपरित्यागो भवता व्यवसित इति ।

A 162 अथ हिरण्यो ऽकथयत् ।

॥ कथा १ ॥

अस्ति दाक्षिणात्ये जनपदे मिहिलारोप्यं नाम नगरम् । तस्य नातिदूरे परिव्राजकावसथः । तत्र परिव्राड्जूटकर्णो नाम प्रतिवसति स्म । स भिक्षावेलायां तस्मान्नगरात्तीर्थभूत इति ब्राह्मणगृहेभ्यः सखण्डगुडदाडिमगर्भाणां स्निग्धद्रवपेशलानामन्नविशेषाणां भिक्षाभाजनं परिपूर्णं कृत्वा तमावसथमवगम्य यथाविधि व्रतकालं कृत्वा तत्र शेषमापीतके सुगुप्तं कृत्वा नागदन्तके स्थापयति । अहं सपरिजनस्तेन वर्ते । एवं भक्ष्यमाणे तस्मिन्सुप्रयत्नस्थापिते ऽपि निर्विण्णः स्थानात्स्थानमुच्चैर्मत्प्रति भयात्संक्रमयति । तदप्यहमनायासेन प्राप्नोमि भक्षयामि च ।

अथैवं गच्छति काले कदाचित्तस्य परिव्राड्बृहत्स्फिग्नाम प्राहुणक आगतः । स जूटकर्णस्तस्य स्वागताद्युपचारं कृत्वा कृतयथोचितव्रतकालस्तस्मिन्नापीतके शेषं सुगुप्तं कृत्वा खट्वासीनः शयनगतं बृहत्स्फिजमपृच्छत् । भवानितो मया वियुक्तः । तत आरभ्य केषु देशान्तरेषु तपोवनेषु वा परिभ्रान्त इति । असावकथयत् । अथ कदाचिदहं महाकार्त्तिक्यां महातीर्थवरे पुष्करे स्नानं कृत्वा महतो जनसमूहदोषाद्भवता वियुक्तः । ततो ऽहं गङ्गाद्वारप्रयागवाराणस्यादिष्वनुकूलप्रतिकूलां जाह्नवीमनु पर्यटन् । किं बहुना । कृत्स्नं महीमण्डलं समुद्रपर्यन्तमवलोकितवान् । अर्धाख्याते च तस्मिञ्जूटकर्णः परिव्राड्नागदन्तोपश्लिष्टो मुहुर्मुहुर्जर्जरमवादयत् । कथ्यमानविघ्ने च क्रियमाणे कुपितो बृहत्स्फिगाह । अहमादृतो भूत्वा भवतः कथयामि । भवतस्तु किमर्थमनादरः । तथा च ।

विमानना दुश्चरितानुकीर्तनं
कथाप्रसङ्गो वचनाद्विस्मयः ।
न दृष्टिदानं कृतपूर्वनाशनं
विरक्तभावस्य नरस्य लक्षणम् ॥ ४४ ॥

सो ऽब्रवीत् । भद्र । न मन्युः करणीयः । पश्य । अयं मे मूषको महतो ऽपकारान्करोति । भिक्षाभाजनप्रध्वंसान्न चाहमेनं शक्नोमि निवारयितुम् । सो ऽब्रवीत् । किमेष एकको ऽत्र मूषकः । उतान्ये ऽपि मूषकाः । सो ऽब्रवीत् । किमन्यैर्मूषकैः । अयं मां दुष्टो योगीवाजस्रं छलयति । तच्छ्रुत्वासावाह । जूटकर्ण । न मूषकमात्रस्येदृशी शक्तिर्भवति । किं तर्हि कारणेनात्र भवितव्यम् । उक्तं च ।

नाकस्माच्छाण्डिली माता विक्रीणाति तिलैस्तिलान् ।
लुञ्चितांल्लुञ्चितैरेव कार्यमत्र भविष्यति ॥ ४५ ॥

जूटकर्ण आह । कथं चैतत् । सो ऽब्रवीत् ।

॥ कथा २ ॥

अस्ति । अहं कदाचिदभ्यर्णासु वर्षासु कस्मिंश्चिदधिष्ठाने स्थितिग्रहणनिमित्तं कंचिद्ब्राह्मणमावासं प्रार्थितवान् । वर्षास्वतीतासु पुनर्विहारार्थं प्रहरशेषायां शर्वर्यां प्रतिबुद्धो ऽचिन्तयम् । कतमेन दिग्भागेनावगन्तव्यम् । अथ युगपदसावपि ब्राह्मणस्तस्यां वेलायां प्रतिबुद्धो जालकान्तरितां भार्यामपृच्छत् । ब्राह्मणि । श्रूयताम् । श्वः पर्वकालो भविता । तत्र त्वया यथाशक्ति ब्राह्मणभोजनं कर्तव्यमिति । असावाह बहुपरुषाक्षरया गिरा । कुतस्ते ब्राह्मणभोजनस्य शक्तिरत्यन्तदरिद्रस्येति । एवमुक्तो ऽसौ कूपे प्रक्षिप्त इव न वचः किंचिदवोचत् । पुनरपि चिरादब्रवीत् । ब्राह्मणि ।

कर्तव्यः संचयो नित्यं न तु कार्यो ऽतिसंचयः ।
अतिसंचयशीलो ऽयं धनुषा जम्बुको हतः ॥ ४६ ॥

असावब्रवीत् । कथं चैतत् । ब्राह्मणो ऽब्रवीत् ।

॥ कथा ३ ॥

अस्ति कस्मिंश्चिदधिष्ठाने मांसवृत्तिर्व्याधः । स प्रत्युषस्युत्थाय किंचिद्वनमनुप्रविश्य शीघ्रमेव मृगं विद्ध्वा कृतमांससंचयः प्रत्यागच्छन्महति तीर्थावतारे ऽवतरन्महिषशावतुल्यमुद्धृतविषाणं कर्दमपिण्डावलिप्तगात्रं सूकरमपश्यत् । तं दृष्ट्वाशुभनिमित्तप्रचोदितो भयमागतः । प्रतिनिवृत्य च प्रतिबद्धगतिः सूकरेण मांसं संकोचितकं भूमौ प्रक्षिप्य धनुः सशरं च कृत्वेदमुवाच ।

न मे धनुर्नापि च बाणसंधनं
किमेष शङ्कां समुपैति सूकरः ।
प्रसह्य पश्याम्यहमस्य निश्चयं
यमेन नूनं प्रहितो ममान्तिकम् ॥ ४७ ॥

इत्युक्त्वा तस्मै विषदिग्धमिषुं प्राहिणोज्जत्रुस्थाने विद्ध्वा परपार्श्वगतं च कृतवान् । सूकरेणापि प्रहारमूर्छितेनोत्तमं जवमास्थायावस्करप्रदेशे तथाभ्याहतः । येन गतासुस्त्रिधागतशरीरो निपतितः । अथ तस्मिन्महति विषमे वृत्ते मृगलुब्धकसूकरप्रस्तरे क्षुत्क्षामकुक्षिर्दर्दुरको नाम गोमायुराहारार्थी तमुद्देशमागतो ऽपश्यन्मृगसूकरलुब्धकान् । तांश्च दृष्ट्वा परं परितोषमुपागतः । आह च ।

नान्नपानानि सततमुत्पद्यन्ते हि देहिनाम् ।
लब्ध्वा प्रभूतमन्नाद्यं क्रमशस्तूपयोजयेत् ॥ ४८ ॥

इति । एवमुक्त्वा धनुःप्रतिबन्धं भक्षयितुमारब्धः । कथमपि दैवाच्छिन्ने प्रतिबन्धे वक्षःप्रदेशे भिन्नः पञ्चत्वमुपगत इति ।

अतो ऽहं ब्रवीमि । कर्तव्यः संचयो नित्यमिति । तत्, ब्राह्मणि, न्याय्याज्जीव्यते । तच्च श्रुत्वा ब्राह्मण्याह । अस्ति मे तिलस्तोकं तण्डुलस्तोकं च । स त्वं प्रत्युषस्युत्थाय समित्कुशाद्यानयनार्थं वनं गच्छ । अहमपि सहानेन शिष्येण कामन्दकिना ब्राह्मणत्रयस्य साधयिष्यामि कृसरमिति । तथा चानुष्ठिते तिलप्रस्थं कामन्दकिनाधिष्ठितं लुञ्चयित्वास्थापितम् । तथा चातिव्यग्रत्वात्ते तिलाः कथमपि दैवाच्छुना विट्टालिताः, तथा चाभ्यन्तरस्थया दृष्टाः । ततो ऽसावब्रवीत् । कामन्दके, न शोभनमापतितम् । विघ्नमुत्पन्नं ब्राह्मणतर्पणस्य । तथापि गच्छ, इमांस्तिलांल्लुञ्चितानपि कृष्णतिलैः परावर्तयित्वा शीघ्रमागच्छ । कृष्णकृसरमेव करिष्यामि । तथा चानुष्ठिते यस्मिन्वेश्मन्यहं भिक्षार्थमुपागतः, तस्मिन्नेव कामन्दकिरपि तिलविक्रयार्थमनुप्रविष्टो ऽकथयत् । गृह्यन्तामिमे तिलाः । ब्राह्मण्याभिहितः । कथं तिला दीयन्त इति । कामन्दकिराह ।

शुक्लान्कृष्णैः प्रयच्छामि यदीष्टं गृह्यतामिति ।
तथेमे लुञ्चिता भद्रे लुञ्चितानेव देहि मे ॥ ४९ ॥

तथा च वृत्ते भर्तास्याः समागतः । तेनाभिहितम् । भद्रे, किमेतदिति । सा तमाह । समार्घास्तिला मया लब्धाः, शुक्लाः कृष्णैः । ततो ऽसौ विहस्याब्रवीत् ।

नाकस्माच्छाण्डिली माता विक्रीणाति तिलैस्तिलान् ।
लुञ्चितांल्लुञ्चितैरेव हेतुरत्र भविष्यति ॥ ५० ॥ इति ।

एवमाख्यायाब्रवीत्परिव्राट् । अस्ति किंचित्खनित्रमिति । जूटकर्ण आह । बाढम्, अस्ति । उपनीते च तस्मिन्कक्ष्यां बद्ध्वा संद-

ष्टौष्ठपुटः पृष्टवान् । कतरस्तस्य संचरणमार्ग इति । आख्याते च तस्मिन्खातकर्म कर्तुमारब्धः । अहं चादावेव तयोरात्मगतमालापं श्रुत्वाहारमुत्सृज्य कौतुकपरो ऽवस्थित आसम् । यदा त्वसौ दुर्गान्वेषणं कर्तुमारब्धः, तदा मया ज्ञातम् । उपलब्धमनेन दुरात्मना मदीयविवरद्वारमिति । मयापि केनापि साधुना पूर्वस्थापितं सुवर्णमाप्तमासीत् । तत्प्राधान्याच्चाहं शक्तिमन्तमात्मानं मन्ये । असावपि दुष्टो विवरानुसारात्तदुपलभ्य गृहीत्वा च धनं पुनरावसथं प्राप्तो जूटकर्णमब्रवीत् । इदं तस्य तद्ब्रह्महृदयम्, यस्यासौ सामर्थ्यादशक्यमपि स्थानमुत्पतति । अर्धार्धं च विभज्य सुखासीनौ स्थितौ ।

तं चाहमात्मनो ऽवसादं प्राप्याचिन्तयम् । कदाचिदिहस्थस्य मे प्रदीपमुज्ज्वाल्यासंशयमासाद्य मां हन्युः । इति तस्मात्स्थानादन्यद्दुर्गस्थानं कृतवान् । अन्ये च, ये ममानुचराः, त आगत्य मामब्रुवन् । भद्र हिरण्य, त्वत्समीपवर्तिनो वयमत्यन्तक्षुधार्ताः । ग्रासमात्रमप्यस्माकं नास्ति । अस्तं गते ऽपि दिवसे न किंचिदस्माभिरासादितम् । तदर्हस्यद्यापि तावदस्मान्संतर्पयितुमिति । तथा नामेत्युक्त्वाहमावसथं तैः समं गतः । एकान्तावस्थितश्च तयोर्दुरात्मनोः पूर्वाख्याते शेषमालापमशृणवम् । अथ जूटकर्णस्तथैवाख्याने वंशं चालयति स्म । तेनाभिहितः । किमद्यापि निराकृते तस्मिन्मुहुर्मुहुश्चालयसि वंशम् । स्थीयताम् । अलमिति । यतो ऽसावाह । भद्र, एष ममापकारी मूषकः पुनः पुनरायाति । स विहस्याब्रवीत् । मा भैषीः । न किंचिदस्त्येतत् । यतः ।

भवत्यर्थेन बलवानर्थाद्भवति पण्डितः ।
पश्येमं मूषकं पापं स्वजातिसमतां गतम् ॥ ५१ ॥

अपि च । यदस्योत्पतने शक्तिकारणम् । तदावयोरेव हस्तगतम् । अहं तु तथैव समर्थितवान् । सत्यसाहाय्यम् । न ममाद्याङ्गुलकन्याप्युत्पतने शक्तिरस्तीति । शृणोमि चानुचराणां परस्परालापम् । आगच्छत । गच्छामः । नायमद्य तृणस्यापि कुब्जीकरणे समर्थः । एवमुक्त्वा पञ्चाशन्मात्रा गताः । पुनरपि पञ्चविंशतिः । दश पञ्च चेति । अथान्ये द्वादशाष्टौ । अथावशिष्टौ द्वौ । तत्राप्येको ऽब्रवीत् । अयमात्मनो ऽप्युदरभरणे न समर्थः । किं पुनरन्येषाम् । इत्युक्त्वा निरपेक्षो ऽसावपि प्रायात् । ततो ऽहं परिचिन्त्यैतावदिति स्वमालयं गतः । प्रभातसमये सर्व एव सपत्नसकाशं गताः । दरिद्रो ऽसाविति वदन्तः । तथा प्रवृत्तानामनुचराणामेको ऽपि न मत्सकाशमनागच्छत् । पश्यामि च । मां दृष्ट्वा संमुखं त एव मत्सपत्नैः सह परस्परं किलकिलायन्तो हस्तास्फालनैर्ममानुचराः संक्रीडन्ति स्म । चिन्तितं च मया । यथा । एवमेतत् ।

यस्यार्थास्तस्य मित्राणि यस्यार्थास्तस्य बान्धवाः ।
यस्यार्थाः स पुमांल्लोके यस्यार्थाः स च पण्डितः ॥ ५२ ॥

अपि च ।

अर्थेन हि विहीनस्य पुरुषस्याल्पमेधसः ।
विच्छिद्यन्ते क्रियाः सर्वा ग्रीष्मे कुसरितो यथा ॥ ५३ ॥

त्यजन्ति मित्राणि धनैर्विहीनं
पुत्राश्च दाराश्च सुहृज्जनाश्च ।
तमर्थवन्तं पुनराश्रयन्ते
अर्थो हि लोके पुरुषस्य बन्धुः ॥ ५४ ॥

दरिद्रस्य मनुष्यस्य प्राज्ञस्य मधुरस्य च ।
काले ऽप्युक्तं हितं वाक्यं न कश्चित्प्रतिपद्यते ॥ ५५ ॥

चण्डालश्च दरिद्रश्च द्वावेतौ सदृशौ मतौ ।
चण्डालस्य न गृह्णन्ति दरिद्रो न प्रयच्छति ॥ ५६ ॥
अर्थेन परिहीणं तु नरमस्पृश्यतां गतम् ।
त्यजन्ति बान्धवाः सर्वे मृतं सत्त्वमिवासवः ॥ ५७ ॥
अर्थेन हीनः पुरुषस्त्यज्यते मित्रबान्धवैः ।
त्यक्तलोकक्रियादारः परासुरिव निष्प्रभः ॥ ५८ ॥
शून्यमपुत्रस्य गृहं चिरशून्यं यस्य नास्ति सन्मित्रम् ।
मूर्खस्य दिशः शून्याः सर्वं शून्यं दरिद्रस्य ॥ ५९ ॥
[उत्तिष्ठ क्षणमेकमुद्वह सखे दारिद्र्यभारं गुरुं
क्लिष्टो यावदहं चिरं मरणजं सेवे त्वदीयं सुखम् ।
इत्युक्तो धनवर्जितेन विदुषा गत्वा श्मशाने शवो
दारिद्र्यान्मरणं वरं सुखकरं ज्ञात्वा स तूष्णीं स्थितः ॥ ६० ॥]

किमपरं भोः । न कश्चिदन्यः प्रतिवचनमपि ददाति ।

तानीन्द्रियाण्यविकलानि तदेव नाम
सा बुद्धिरप्रतिहता वचनं तदेव ।
अर्थोष्मणा विरहितः पुरुषः स एव
शेते हकार इव संकुचिताखिलाङ्गः ॥ ६१ ॥

तत्प्रायशो लोके स्वरूपमीदृशम् । विनिपतितमार्यमपि जनं दृष्ट्वा धन्यन्धो मूकश्च भवति धनमदावलेपात् । तथा च ।

विलोचने चाविकले च वीक्षते
स्फुटा च वागस्ति न चापभाषणम् ।
अहो नृशंसैर्विभवैस्तथा कृतं
यथेश्वरो याचनयन्त्रतां गतः ॥ ६२ ॥

तन्मादृशानां किं नाम तद्वरं स्यात् । यस्य स्यादीदृशः फलविपाकः । यत्सततं देहीति वक्ति । तत्सर्वथा धनहीनस्य ममाधुना नेह श्रेयः । उक्तं च ।

वसेन्मानाधिकं स्थानं मानहीनं न संवसेत् ।
मानहीनं सुरैः सार्धं विमानमपि वर्जयेत् ॥ ६३ ॥

एवमुक्त्वाप्यहं पुनरप्येवमचिन्तयम् । किमर्थितां कस्यचित्करोमि । तदेतत्कष्टतरम् । यत्कारणम् ।

कुब्जस्य कीटखातस्य दावनिष्कुषितत्वचः ।
तरोरप्यूषरस्थस्य वरं जन्म न चार्थिनः ॥ ६४ ॥
कण्ठे गद्गदता स्वेदो मुखे वैवर्ण्यवेपथू ।
म्रियमाणस्य चिह्नानि यानि तान्येव याचतः ॥ ६५ ॥

तदर्थित्वमपि जघन्यम् ।

वैराग्याहरणं धियो ऽपहरणं मिथ्याविकल्पास्पदं
पर्यायो मरणस्य दैन्यवसतिः शङ्कानिधानं परम् ।
मूर्तं लाघवमास्पदं च विपदां तेजोहरं मानिना-
मर्थित्वं हि मनस्विनां न नरकात्पश्यामि वस्त्वन्तरम् ॥ ६६ ॥

अपि च ।

निर्द्रव्यो ह्रियमेति ह्रीपरिगतः प्रभ्रश्यते तेजसो
निस्तेजाः परिभूयते परिभवान्निर्वेदमागच्छति ।
निर्विण्णः शुचमेति शोकमनसो बुद्धिः परिभ्रश्यति
निर्धीकः क्षयमेत्यहो निधनता सर्वापदामास्पदम् ॥ ६७ ॥

अपि च ।

वरमहिमुखे क्रोधाविष्टे करौ विनिवेशितौ
विषमपि वरं पीत्वा सुप्तं यमस्य निवेशने ।

गिरिवरतटादात्मा मुक्तो वरं शतधा गतो
न तु खलजनावाप्तैरर्थैः प्रियं कृतमात्मनः ॥ ६८ ॥

वरं विभवहीनेन प्राणैः संतर्पितो ऽनलः ।
नोपचारपरिभ्रष्टः कृपणो ऽभ्यर्थितो जनः ॥ ६९ ॥

अथैवं गते केनोपायेन जीवितं स्यात् । किं चौर्येण । तदपि परस्वादानं कष्टतरम् । यत्कारणम् ।

वरं युक्तं मौनं न च वचनमुक्तं यदनृतं
वरं मृत्युः श्लाघ्यो न च परकलत्राभिगमनम् ।
वरं प्राणत्यागो न च पिशुनवाक्येष्वभिरति-
र्वरं भिक्षार्थित्वं न च परधनास्वादमसकृत् ॥ ७० ॥

तदर्थित्वे ऽपि हि पुरुषस्य ध्रुवो ऽवमानः । कथम् ।

आकारपरिवृत्तिस्तु बुद्धेः परिभवः पुनः ।
आशाहानिरिवार्थित्वं परासुत्वमिवापरम् ॥ ७१ ॥

अथ किं परपिण्डेनात्मानं यापयामि । कष्टं भोः । तदपि द्वितीयं मृत्युद्वारम् ।

रोगी चिरप्रवासी परान्नभोजी परावसथशायी ।
यज्जीवति तन्मरणं यन्मरणं सो ऽस्य विश्रामः ॥ ७२ ॥

अपि च ।

जातः कुले महति मानधनावलिप्तः
संमाननाभ्युदयकाल इव प्रहर्षी ।
तत्क्लेषपिण्डमपि नाम नृपस्य भुङ्क्ते
यः सारमेय इव कष्टतरं किमन्यत् ॥ ७३ ॥

आशाविप्लुतचेतसो ऽभिलषिताल्लाभादलाभो वर-
स्तस्यालाभनिराकृता हि तनुतामापद्यते प्रार्थना ।

इष्टावाप्तिसमुद्भवस्तु सुतरां हर्षः प्रमाथी धृतेः
सेतोर्भङ्ग इवाम्भसां विवशतां वेगेन विस्तार्यते ॥ ७४ ॥

अपि च ।

तिर्यक्पातितचक्षुषां स्मयवतामुच्चैःकृतैकभ्रुवा-
माध्मानामवलेपतुङ्गशिरसां श्रुत्वा गिरो दारुणाः ।
किं सद्यः स्फुटनं प्रयुक्तासुरसः सेवाकृतामर्थिना-
सन्तस्त्वद्वि वज्रसारदृढया नालिप्यते तृष्णया ॥ ७५ ॥

दीना दीनमुखैर्यदि स्वशिशुकैराकृष्टचीराम्बरा
क्रोशद्भिः क्षुधितैर्निरन्नपिठिरा दृश्येत नो गेहिनी ।
याञ्चाभङ्गभयेन गद्गदगलत्रोच्चारितार्धाक्षरं
को देहीति वदेत्स्वदग्धजठरस्यार्थे मनस्वी पुमान् ॥ ७६ ॥

तन्निःस्वतेयमनेकप्रकारं मरणम् । अथ चेत्तदेव धनमात्मीकरोमि । मया तु तयोर्दुरात्मनोरुपधानीकृता दृष्टपूर्वास्ते दीनाराः स्थगिताः ।

एवं च संप्रधार्य गतो ऽहं तमुद्देशम् । अथ तावन्यमनस्कौ मत्वा संजिघृक्षुरहमुपश्लिष्टः । दृष्ट्वा च मां बृहत्स्फिग्लगुडेनाताडयत् । अहमपि मुमूर्षुः कथमपि निवृत्तः । पुनरपि चिराद्रूढाशः समाश्वस्य दीनारान्तिकमुपश्लिष्टस्तेन निर्दयेनैवं शिरस्यभिहतः । येनाद्यापि स्वप्नगतानामपि तादृशानामुद्विजे । पश्य चेमं तत्कालकृतं शिरसि मे व्रणम् । साधु चेदमुच्यते ।

सर्वप्राणविनाशसंशयकरीं प्राप्यापदं दुस्तरां
प्रत्यासन्नभयो न वेत्ति विधुरं स्वं जीवितं काङ्क्षति ।
उत्तीर्णस्तु ततो धनार्थमपरां भूयो विशत्यापदं
प्राणानां च धनस्य साधनधियामन्योन्यहेतुः पणः ॥ ७७ ॥

सो ऽहं बहु विचिन्त्यास्तां धनमेतन्ममेति निवृत्तस्तृष्णातः *सुष्ठु चेदमुच्यते* ।

ज्ञानं चक्षुर्नेदं शीलं कुलपुत्रता न कुलजन्म ।
संतोषश्च समृद्धिः पाण्डित्यमवार्यविनिवृत्तिः ॥ ७८ ॥
सर्वाः संपत्तयस्तस्य संतुष्टं यस्य मानसम् ।
उपानद्गूढपादस्य सर्वा चर्मावृतेव भूः ॥ ७९ ॥
न योजनशतं दूरं वाह्यमानस्य तृष्णया ।
संतुष्टस्य करप्राप्ते ऽप्यर्थे भवति नादरः ॥ ८० ॥
सर्पाः पिबन्ति पवनं न च दुर्बलास्ते
पर्णैस्तृणैर्वनगजा बलिनो भवन्ति ।
मूलैः फलैर्मुनिवराः क्षपयन्ति कालं
संतोष एव महतां परमा विभूतिः ॥ ८१ ॥

तत्सर्वथासाध्ये ऽर्थे परिच्छेद एव श्रेयान् ।

दारिद्र्यस्य परा मूर्तिर्याच्ञा न द्रविणाल्पता ।
जरद्गवधनः शम्भुस्तथापि परमेश्वरः ॥ ८२ ॥

तथा च ।

को धर्मो भूतदया किं सौख्यमरोगता जन्तोः ।
कः स्नेहः सद्भावः किं पाण्डित्यं परिच्छेदः ॥ ८३ ॥
सन्ति शाकान्यरण्येषु नद्यश्च विमलोदकाः ।
चन्द्रः सामान्यदीपो ऽयं विभवैः किं प्रयोजनम् ॥ ८४ ॥

इति । एवमवधार्याहं स्वभवनमागतो ऽपश्यं चित्रग्रीवं पाशबद्धम् । इति च तं मोक्षयित्वानेन लघुपतनकेनाहं भवदन्तिकं प्रापितः ।

तदेतदेव निर्वेदकारणम् । अपि च । न कथंचन जीव्यते ।

सनगोरगसारङ्गं सदेवासुरमानुषम् ।
आ मध्याह्नात्क्षताहारं भवतीह जगत्त्रयम् ॥ ८५ ॥
कृत्स्नामपि महीं जित्वा निकृष्टां प्राप्य वा दशाम् ।
देन्तायां भोक्तुकामेन लभ्या तण्डुलसेतिका ॥ ८६ ॥
यस्यानुबन्धात्पापीयानधोनिष्ठो विपद्यते ।
तस्यार्थे को नु विबुधः कुर्यात्कर्म विगर्हितम् ॥ ८७ ॥

तच्छ्रुत्वा मन्थरको ममाश्वासितवान् । भद्र । नाधृतिः करणीया स्वदेशपरित्यागो मया कृत इति । बुद्धिमांस्त्वमसि । किं विमुह्यसे । अपि च ।

शास्त्राण्यधीत्यापि भवन्ति मूर्खा
यस्तु क्रियावान्पुरुषः स विद्वान् ।
स्वाधयत्यातुरमौषधं हि
किं नाममात्रेण भवत्यरोगः ॥ ८८ ॥
फलं कतकवृक्षस्य यद्यप्यम्बुप्रसादकम् ।
न नामग्रहणादेव तस्य वारि प्रसीदति ॥ ८९ ॥
न स्वल्पमप्यव्यवसायभीरोः
करोति विज्ञानविधिर्गुणं हि ।
अन्धस्य किं हस्ततलस्थितो ऽपि
निवर्तयत्यान्ध्यमिह प्रदीपः ॥ ९० ॥
दत्त्वा याचन्ति पुरुषा हत्वा वध्यन्त एव हि ।
घातयित्वा च घात्यन्ते नरा भाग्यविपर्यये ॥ ९१ ॥

A 165 न चैतन्मन्तव्यम् ।

[स्थानस्थिता हि पुरुषाः पूज्यन्ते न पदच्युताः ।]
स्थानभ्रष्टा न पूज्यन्ते केशा दन्ता नखा नराः ।
एतज्ज्ञात्वा तु मतिमान्न स्वस्थानं परित्यजेत् ॥ ९२ ॥

A 166 तत्कापुरुषवृत्तमेतत् । न हि सतां स्वदेशविदेशयोर्विशेषः ।

को धीरस्य मनस्विनः स्वविषयः को वा विदेशः सतो
यं देशं श्रयते तमेव कुरुते बाहुप्रतापार्जितम् ।
यद्दंष्ट्रानखलाङ्गूलप्रहरणैः सिंहो वनं गाहते
तस्मिन्नेव हतद्विपेन्द्ररुधिरैस्तृष्णां छिनत्त्यात्मनः ॥ ९३ ॥

A 167 तत् । भद्र । नित्यसुद्योगपरेण भवितव्यम् ।

न दैवमिति संचिन्त्य त्यजेदुद्योगमात्मनः ।
अनुद्योगेन कस्तैलं तिलेभ्यः प्राप्तुमिच्छति ॥ ९४ ॥

A 168 उद्युक्तानां ह्यायान्ति धनभोगा इति । तथा च ।

निपानमिव मण्डूकाः सरः पूर्णमिवाण्डजाः ।
शुभकर्माणमायान्ति सहायाश्च धनानि च ॥ ९५ ॥

उत्साहसंपन्नमदीर्घसूत्रं
क्रियाविधिज्ञं व्यसनेष्वसक्तम् ।
शूरं कृतज्ञं दृढसौहृदं च
लक्ष्मीः स्वयं वाञ्छति वासहेतोः ॥ ९६ ॥

अव्यवसायिनमलसं दैवपरं पौरुषाच्च परिहीणम् ।
वृद्धमिव पतिं प्रमदा नेच्छत्यवगूहितुं लक्ष्मीः ॥ ९७ ॥

पटुरिह पुरुषः पराक्रमे
कुमतिरपि प्रभुरर्थसंचये ।
न हि सदृशमतिं बृहस्पतेः
शिथिलपराक्रममेति सत्क्रिया ॥ ९८ ॥

A 169 अर्थरहितो ऽपि भवान्प्रज्ञोत्साहशक्तिसंपन्नो ऽसामान्यमनुष्यसदृशः । कथम् ।

विनाप्यर्थैः प्राज्ञः स्पृशति बहुमानोन्नतिपदं
परिष्वक्तो ऽप्यर्थैः परिभववशं याति कृपणः ।
स्वभावादुद्भूतां गुणसमुदयावाप्तिविपुलां
द्युतिं सैंहीं न श्वा कृतकनकमालो ऽपि लभते ॥ ९९ ॥

तत् । भद्र ।

उत्साहशक्तिगतविक्रमधैर्यराशि-
र्यो वेत्ति गोष्पदसुखायतनं समुद्रम् ।
वल्मीकशृङ्गशिखरं च सदा नगेन्द्रं
लक्ष्मीः सदा तमुपयाति न दीनसत्त्वम् ॥ १०० ॥

नात्युच्चशिखरो मेरुर्नातिनीचं रसातलम् ।
व्यवसायद्वितीयानां नाप्यपारो महोदधिः ॥ १०१ ॥

A 170 तदर्थानापचते सुचरितमपि । मनुष्यं क्षणाद्ध्वंसयन्ति । उक्तं च ।

किं धनेन करिष्यन्ति देहिनो भङ्गुराश्रयाः ।
यदर्थं धनमिच्छन्ति तच्छरीरमशाश्वतम् ॥ १०२ ॥

A 171 उक्तं च भगवता वेदव्यासेन ।

नैनं सुहृत्समनुयाति न बन्धुवर्गो
नार्थाः प्रयत्नरचिता न रतिर्न भोगाः ।
यस्मिन्क्षणे प्रियशतानि विहाय पुंसः
प्राणाः स्वकर्मफलपथ्यदनाः प्रयान्ति ॥ १०३ ॥
सर्वथा धर्ममूलो ऽर्थो धर्मस्यार्थनिबन्धनः ।
इतरेतरयोनी तौ विद्धि मेघोदधी यथा ॥ १०४ ॥
जीवितं च शरीरं च जात्यैव सह जायते ।
उभे सह विवर्धेते उभे सह विनश्यतः ॥ १०५ ॥
यथा धेनुसहस्रेषु वत्सो विन्दति मातरम् ।
तथा कर्तृसहस्रेषु कर्तारं कर्म विन्दति ॥ १०६ ॥

उक्तं च ।

सधन इति किं मदस्ते च्युतविभवः किं विषादमुपयासि ।
करनिहतकन्दुकसमाः पातोत्पाता मनुष्याणाम् ॥ १०७ ॥

A 172 तेन हि जलबुद्बुदवदस्थिराणि धनानि । कथम् ।

मेघच्छाया खलप्रीतिर्नवसस्यानि योषितः ।
किंचित्कालोपभोग्यानि यौवनानि धनानि च ॥ १०८ ॥

A 173 तद्बुद्धिमता धनमासाद्य दानभोगयोर्विनियोक्तव्यम् । उक्तं च ।

आयासशतलब्धस्य प्राणेभ्यो ऽपि गरीयसः ।
गतिरेकैव वित्तस्य दानं शेषा विपत्तयः ॥ १०९ ॥
यो न ददाति न भुङ्क्ते सति विभवे नैव तस्य तद्द्रव्यम् ।
कन्यारत्नमिव गृहे तिष्ठन्त्यर्थाः परस्यार्थे ॥ ११० ॥
अतिसंचयलुब्धानां वित्तमन्यस्य कारणम् ।
अन्यैः संचीयते यत्नादन्यैश्च मधु पीयते ॥ १११ ॥

A 174 तत्केचिदत्र पुरुषा धनभोगभागिनः । केचिदस्य रचितारः । तथा च ।

अर्थस्योपार्जनं कृत्वा नैवाभाग्यः समश्नुते ।
अरण्यं महदासाद्य मूढः सोमिलको यथा ॥ ११२ ॥

A 175 हिरण्य आह । कथं चैतत् । मन्थरको ऽब्रवीत् ।

## ॥ कथा ४ ॥

अस्ति ' कस्मिंश्चिदधिष्ठाने सोमिलको नाम कौलिकः प्रतिवसति स्म । स यदुपार्जयति ' तत्तस्य दिवसव्ययादृते ऽधिकतां नोपयाति । जातनिर्वेदश्चासौ देशान्तरमगमत् । तत्र महता क्लेशेन वर्षत्रयाभ्यन्तरे दीनारशतमर्जितम् ' स्वदेशं च प्रायात् । अर्धपथे संध्यासमये प्राप्ते न्यग्रोधपादपमरण्यमध्ये समासादितवान् ' अचिन्तयच्च । क्व सांप्रतं गमिष्यामि विप्रकृष्टतरं ग्रामस्येति । तदस्मिन्नेव न्यग्रोधपादप आरूढो यामिनीं यापयामि । इत्यवधार्य तथा कृतवान् । अर्धरात्रे च कथंचित्स्वप्न इव पश्यति स्म द्वौ पुरुषौ महाप्रमाणौ दिव्याकृती क्रोधसंरक्तनयनौ तस्याभ्याशमायातौ । तयोरेकेनाभिहितम् । भो वङ्कालक ' एवं भवान् । बहुशस्त्वं मया निवारितपूर्वः ' यथास्य सोमिलकस्य पानभोजनादृते ऽपरं न किंचिद्दातव्यम् । अस्याद्य दीनारशतं वर्तते । शीघ्रमपहरस्वेति । अथासावाह । यथाज्ञापयसि ' देव । एवं करोमि । इत्याकर्ण्य प्रतिबुद्धो ऽसौ यावत् ' दीनारशतं नापश्यत् ' विषण्णहृदयश्चाचिन्तयत् । कष्टं भोः । किमेतत् । कथमिह केनापि भूतेन वञ्चितः । तत्किमधुना गृहं गत्वा करिष्ये । इतः प्रतिनिवृत्य पुनर्वित्तमासाद्य यावद्गच्छामि । एवं चिन्तयन्प्रभातायां रात्र्यां भूयो ऽपि नगरमासाद्य वित्तोपार्जनाय चित्तमास्थाय कतिपयकालेन पञ्चाशद्दीनारानुपार्ज्य पुनः स्वदेशगमनाय तेनैव मार्गेण प्रवर्तितः । दैवचोदितः सन्नाधिकं लभते ' नान्यमार्गगमनं वा । तत्रैव नीयते ' यावदस्तं गच्छति भानौ तमेव न्यग्रोधमासादितवान् ' अचिन्तयच्च । कष्टं भोः । किमिदमारब्धं दैवहतकेन । पुनः स एव

न्यग्रोधरूपी राक्षस आपतित इति । एवं चिन्तयन्स्वप्नायमानः पश्यति स्म द्वावेतौ पुरुषौ । तयोरेको ऽब्रवीत् । भो वङ्काल । सोमिलकस्य पञ्चाशद्दीनारा वर्तन्ते । तन्न युक्तम् । ततो ऽसावाह । हृतानवधारयस्वेति । सोमिलकस्तु प्रतिबुद्धो नाद्राक्षीद्धृतानिति । अथ जातनिर्वेदो ऽब्रवीत् । किं मम जीवितेन प्रयोजनम् । को ऽयं वृत्तान्तः । केन वा कारणेन मम क्लेशार्जितवित्तमपहरतीति न विजानामि । अथ प्राणांस्त्यक्ष्यामीति । एवं चिन्तयन्निराहारस्तत्रैव तस्थौ । यावत्कतिपयैरेवाहोभिर्दिव्याकारं पुरुषं दृष्टवान् । तेनोक्तः । भोः सोमिलक । धनदो ऽस्मि । नाभाव्यं कस्मैचित्प्रयच्छामि धनम् । तथा च ।

यदभावि न तद्भावि भावि यत्तदनन्यथा ।
इति चिन्ताविषघ्नो ऽयमगदः किं न पीयते ॥ ११३ ॥

शयान आकस्मिकमश्नुते फलं
कृतप्रयत्नो ऽप्यपरो ऽवसीदति ।
असंयमान्नृत्यति केवलं जनो
विधिस्तु यत्रेच्छति तत्र संपदः ॥ ११४ ॥

नैवाकृतिः फलति नैव गुणा न शौर्यं
विद्या न चैव न च यत्नकृतो विशेषः ।
भाग्यानि कर्मफलसंचयसंचितानि
काले फलन्ति पुरुषस्य यथैव वृक्षाः ॥ ११५ ॥

क्रुद्धो ऽपि कः कस्य करोति दुःखं
सुखं च कः कस्य करोति हृष्टः ।
स्वकर्मग्रन्थिग्रथितो हि लोकः
कर्ता करोतीति वृथाभिमानः ॥ ११६ ॥

बुद्धिमन्तो महोत्साहाः प्राज्ञाः शूराः कुलोद्गताः ।
पाणिपादैरुपेताश्च परेषां भृत्यतां गताः ॥ ११७ ॥

किमत्र परिदेवितेन ' सोमिलक । पानभोजनादृते तव वित्तोपार्जनं न किंचिदस्ति ।

वहन्ति शिबिकामन्ये सन्त्यन्ये शिबिकां गताः ।
अकारणं हि वक्तृत्वं व्युत्थानं केवलं जरा ॥ ११८ ॥
न मन्त्रबलवीर्येण प्रज्ञया पौरुषेण वा ।
अवश्यं लभते जन्तुरत्र का परिदेवना ॥ ११९ ॥
लब्धव्यान्येव लभते गन्तव्यान्येव गच्छति ।
प्राप्तव्यान्येव चाप्नोति दुःखानि च सुखानि च ॥ १२० ॥
अप्रार्थितानि दुःखानि यथैवायान्ति देहिनाम् ।
सुखान्यपि तथा मन्ये दैवमत्रातिरिच्यते ॥ १२१ ॥
तत्को विशेषयति केन कृतो विशिष्टः
को वा धनैः सह विजायति को दरिद्रः ।
भाग्यानि षट्पद इव स्थिरचञ्चलानि
नित्यं मनुष्यकुसुमेषु परिभ्रमन्ति ॥ १२२ ॥

तथापि दैवपुरुषयोगादर्थोत्पत्तिः ' पुरुषश्चरति ' दैवं फलतीति । अत्रोद्योगपरेणाहं भवता दृष्टः । अमोघदर्शनो ऽस्मि । किं नु ते करवै । असौ विज्ञापितवान् । धनं मे देहीति । धनदो विहस्याब्रवीत् । मूढ ' किं त्वनेन क्रियते । उपभोगो ऽत्र कारणम् । गच्छ ' अस्मिन्नेवाधिष्ठाने द्वौ वणिजौ पश्य । एको धनी ' अपरो भोगवान् । तौ दृष्ट्वा यादृक्तयोरभिवाञ्छसीति ' तादृग्भविष्यसि । इत्युक्त्वान्तर्हितः ।

सोमिलको ऽपि प्रभाते तन्नगरमनुप्रविश्य सार्थवाहं धनगुप्तमाससाद् । तत्रासौ निर्भर्त्स्यमानो ऽपि कथमपि गृहे प्रविश्यालिन्दके निपत्यावस्थितः । सो ऽपि वणिक्संध्यामतिवाह्य निशामुखे किंचिन्मात्रमशनमकरोत् । सोमिलके ऽपि किंचिन्मात्रमशनमदापयत् । अथासौ कौलिकः कुशानास्तीर्य भूमौ निपत्य सुप्तो ऽपश्यत्तावेव द्वौ पुरुषौ । तयोरेको ऽब्रवीत् । भो वङ्काल । धनगुप्तेनाद्य कौलिकस्याशनं दापयता द्विगुणव्ययेनात्मा नियोजित इति । सर्वस्य निपुणं गणयामि । नास्य स्थापनादृते दाने भोजने वा किंचिद्विहितम् । तदहं प्रातः समीकरोमीति । एवं श्रुत्वा प्रतिबुद्धः । धनगुप्तो ऽपि प्रातर्विसूचिकया महानत्ययं गतः । स्वेदोष्णवारिपानादिना च परिक्लिष्टोपोषितः । ततः स कौलिकः प्रभाते दैवचोदितो ऽचिन्तयत् । ईदृशेन धनेन किं कारणम् । प्रकृतिर्दुस्त्यजेति ।

ततो द्वितीयं तं व्ययशीलं भोगवर्माणमुद्दिश्य सोमिलको गतः । तेनासौ महता भोजनपानादिना सत्कृतः सोमिलकस्तथैव महति शयने सोपचारे स्वास्तीर्णे निशायां सुप्तो ऽपश्यत्तावेव पुरुषौ । तयोरेको ऽब्रवीत् । भद्र वङ्काल । शोभनमनुष्ठितं भोगवर्मणा प्राङ्गणकं सोमिलकं संमानयता । तद्भूयो ऽपि प्रवर्धमानमर्थं व्ययोपभोगे ऽस्य दातव्यम् । स चाह । एवं क्रियते ।

प्रतिबुद्धः सोमिलको ऽचिन्तयत् । भोगा ईदृशा मे भवन्तु । किं धनेन नाममात्रेण क्रियत इति । तथा च समर्थितवान् ।

A 176 अतो ऽहं ब्रवीमि । अर्थस्योपार्जनं कृत्वेति । तदत्रैव सहानुद्विग्नः कालमतिवाहयस्वेति । तच्छ्रुत्वा हिरण्यो ऽब्रवीत् । * * * * * * * * * * * * * * * * * भद्र मन्थरक । एवमेतत् । साध्वाश्रयणीयगुणोपेतो ऽसि । सुतरां मे हिरण्याभ्यवपत्तौ मनस्तुष्टिरुत्पन्ना । को ऽत्र विस्मयः ।

सुखस्य मण्डः परिपीयते तै-
र्जीवन्ति नित्यं पुरुषास्त एव ।
हृष्टाः सुहृष्टैः सुहृदः सुहृद्भिः
प्रियाः प्रियैर्ये सहिता रमन्ते ॥ १२३ ॥
ऐश्वर्यवन्तो ऽपि हि निर्धनास्ते
व्यर्थश्रमा जीवितमात्रसाराः ।
कृता न लोभेन हतात्मभिर्यैः
सुहृत्स्वयंग्राहविभूषणा श्रीः ॥ १२४ ॥

येन हि ।

संरक्षणं साधुजनस्य नित्यं
कार्यं त्वया जीवितसंशये वा ।
महोदयानां हि शरीरलाभे
फलं परानुग्रहमात्रमेव ॥ १२५ ॥

A 177 तच्छ्रुत्वा मन्थरको ऽब्रवीत् । भद्र हिरण्य नीतिज्ञो भव ।

आशां कालवतीं कुर्यात्तां च विघ्नेन योजयेत् ।
विघ्नं युञ्ज्यान्निमित्तेन निमित्तं चापि हेतुना ॥ १२६ ॥
सुपुष्पितः स्यादफलः फलवान्स्याद्दुरारुहः ।
आमः स्यात्पक्वसंकाशो न तु शीर्येत कस्यचित् ॥ १२७ ॥
प्रियं ब्रूयादकृपणः शूरः स्यादविकत्थनः ।
दाता नापात्रवर्षी स्यात्प्रगल्भः स्यादनिष्ठुरः ॥ १२८ ॥
लोभात्प्रमादाद्विश्वासाच्चतुर्थी नास्ति वञ्चना ।
इति संचिन्त्य मनसा षड्वर्गनियतो भव ॥ १२९ ॥

A 178 विजिगीषुस्त्वम् । मा गा विषादम् । अपि च ।

एकया द्वे विनिर्जित्य त्रींश्चतुर्भिर्वशीकुरु ।
पञ्च जित्वा विदित्वा षट्सप्त हित्वा सुखी भव ॥ १३० ॥

एवं ज्ञात्वा ।

संतापो न खलु नरेण जीवलोके
वृत्त्यर्थं क्षणमपि पण्डितेन कार्यः ।
निश्चेष्टः शयनगतो ऽप्युपाश्नुते तं
प्राप्तव्यो नियतिबलाश्रयेण यो ऽर्थः ॥ १३१ ॥
नैवार्थो व्यसनगतेन शोचितव्यो
हर्षो वा सुखमुपलभ्य न प्रयोज्यः ।

प्राक्कर्मायतिजनितो हि यो विपाकः
सो ऽवश्यं भवति नृणां शुभो ऽशुभो वा ॥ १३२ ॥
कर्तव्यः प्रतिदिवसं प्रसन्नचित्तैः
स्वल्पो ऽपि व्रतनियमोपवासधर्मः ।
प्राणेषु प्रहरति नित्यमेव मृत्यु-
र्भूतानां महति कृते ऽपि हि प्रयत्ने ॥ १३३ ॥
संग्रामे प्रहरणसंकटे वने वा
दीप्ते ऽग्नौ तरुविवरे महोदधौ वा ।
सर्पैर्वा सह वसतामुदीर्णदर्पै-
र्नाभाव्यं भवति न भाविनो विनाशः ॥ १३४ ॥
आगमिष्यन्ति ते भावा ये भावा मयि भाविनः ।
अहं तैरनुसर्तव्यो न तेषामन्यतो गतिः ॥ १३५ ॥
यस्मिन्वयसि यत्काले यदहे चाथवा निशि ।
यन्मुहूर्ते क्षणे वापि तत्तथा न तदन्यथा ॥ १३६ ॥
नैवान्तरिक्षे न समुद्रमध्ये
न पर्वतानां विवरप्रदेशे ।
न मातृकुक्षौ न च सो ऽस्ति देशो
यत्र स्थितस्य प्रभवेन्न कर्म ॥ १३७ ॥
न दाता सुखदुःखानां न हर्ता भुवि कश्चन ।
आत्मापराधमूलस्य फलान्येतानि देहिनाम् ॥ १३८ ॥

अपि च ।

द्वीपादन्यस्मादपि मध्यादपि जलनिधेर्दिशो ऽप्यन्तात् ।
आनीय झगिति घटयति विधिरभिमतमभिमुखीभूतः ॥ १३९ ॥

A 179 तत् । भद्र । भवानरोगः संतोषपरश्च । उद्यमनपरो भव । अवश्यमशोकवृत्त्या वर्तसे ।

दानाद्दमो विशिष्टो वै दानं केचिद्विजानते ।
दाता कुप्यति नो दान्तस्तस्माद्दानात्परो दमः ॥ १४० ॥

A 180 दान्तेन दानं दातव्यम् । उक्तं च ।

दानेन तुल्यो विधिरस्ति नान्यः
संतोषतुल्यं सुखमस्ति किं वा ।
विभूषणं शीलसमं कुतो वा
लाभो ऽस्ति नारोग्यसमः पृथिव्याम् ॥ १४१ ॥

A 181 तत्सर्वसंपत्संपन्नस्त्वम् । न चैतन्मन्तव्यम् ' यदर्थैर्विरहितः किं करोमीति । तद्विद्वानसि । किमेव मन्यसे ।

दैवात्कन्दुकपातेनोत्पतत्यार्यः पतन्नपि ।
तथा त्वनार्यः पतति मृत्पिण्डपतनं यथा ॥ १४२ ॥

A 182 तत्किं बहुना । स्ववेश्मेदं भवतः । निर्वृतो भूत्वा मयैव सह कालं नयेति ।

A 183 एवमर्धावसिते च वाक्ये लुब्धकत्रासितश्चित्राङ्गो नाम मृगस्तृषार्तस्तं विपुलह्रदमागतः । तं च दृष्ट्वा ते भयचकितहृदयाः पलायितुमारब्धाः । तस्याभिद्रुतमुदकाभिलाषिणो ऽवसरतो वारिसंघट्टश्रवणान्मन्थरः पुलिनात्त्वरितमम्भसि निमग्नः । तं चाकुलीकृतं दृष्ट्वा लघुपतनको ऽपि किमेतदिति जिज्ञासुर्विपुलवृक्षमधिरूढः । हिरण्यो ऽप्याविग्नमनास्तत्स्तम्भविवरमनुप्रविष्टः । चित्राङ्गो ऽप्यात्मशङ्कया तटमाश्रितः । अथ लघुपतनको वियदुत्पत्य योजनप्रमाणं मण्डलमवलोक्य पुनर्वृक्षमवलीनो मन्थरकमब्रवीत् । एह्येहि । न ते कुतश्चिद्भयमिति । दृष्टं मया । केवलं शष्पभुग्मृगो ह्रदमुदकार्थी समागतः । तच्छ्रुत्वा दीर्घदर्शी मन्थरः समुत्तीर्णः । त्रयो ऽपि ते विश्वस्तचित्ताः पुनः समागताः ।

A 184 अथाभ्युपागतं वत्सलतया मन्थरको मृगमाह । भद्र ' पीयतामवगाह्यतां चोदकं प्रकामतः । कृतार्थो भवानिहागन्तुमर्हतीति । तथा चानुष्ठिते चित्राङ्गश्चिन्तयामास । कश्चिदेभ्यो मे विनाशो नास्तीति । कच्छपस्तावच्छक्तिमानुदकगत एव । उन्दुरवायसावपि मृगस्य कावन्यत्र क्षुद्रजन्तोः । तदुपश्लिष्याम्येनान् ।

A 185 इति मत्वा तैः संगतः । मन्थरेण स्वागताद्युपचारपुरःसरं समभिहितश्चित्राङ्गः । अपि भवतः शिवम् । कथं चेदं गहनं वनमागतो ऽसि । सो ऽब्रवीत् । निर्विण्णो ऽस्मीत्यनेन महता भयेनानेकप्रकारेण ' सारोहैर्लुब्धकैश्चेतश्चेतश्च परिघट्ट्यमानो ऽहं महदिदं विजनमागतो ऽस्मि । तच्च श्रुत्वा मन्थरेणाभिहितम् । भद्र ' मा भैषीः । स्ववेश्मेदं भवतः । निर्विघ्नमत्र यथेप्सितमुष्यतामिति । ततस्तेषामेवं प्रीत्या कालो ऽतिवर्तते । सर्वेषां च कृताहाराणामजस्रं विपुलवृक्षच्छायायां मध्याह्नवेलायां समागमः । अनेकशास्त्रविवरणव्यापारसक्तचित्तानां कालो ऽतिवर्तते ।

A 186 अथ कदाचिदुचितायां वेलायां चित्राङ्गो न दृश्यते स्म । तं चापश्यन्तो ऽतीवव्याकुलितचित्ताः संपन्नाः । विपरीतचित्ता निमित्तप्रचोदिताकुशला धृतिं न लेभिरे यदा ' तदा लघुपतनकं मन्थर आह । त्वमभिज्ञो ऽस्यस्य कर्मणः शक्तियुक्तत्वात् । तदुपलभ्यतामुत्प्लुत्य यथावस्थितां चित्राङ्गवार्त्तामिति । तथा चानुष्ठिते नातिदूरं गत्वापश्यदुदकावतारे कीलसक्तचर्मपाशेनावबद्धं मृगम् ।

A 187 समेत्य चाब्रवीत् । कथमिमामापदं प्राप्तस्त्वमिति । सो ऽब्रवीत् । भद्र ' नायमाक्षेपस्य कालः । ये मूढधियो हेयोपादेयं न जानते ' ते व्यसनकाले ऽन्यथा

कुर्वन्ति । त्वं चाश्रयणीयगुणोपेतः क्षिप्रकारी । तन्मा विलम्बस्व । यत्कारणम् । भवाञ्छक्तियुक्तः । भवाननभिज्ञः । तदाशु गच्छ । हिरण्यमानय । सो ऽप्ययत्नेन पाशच्छेदनसमर्थ इति ।

A 188 तस्मिन्गते चित्राङ्गो ऽचिन्तयत् ।

सर्वः सर्वं न जानाति सर्वज्ञो नास्ति कश्चन ।
नैकत्र च वित्तष्ठास्ति ज्ञानस्य पुरुषे क्वचित् ॥ १४३ ॥
अप्युन्मत्तात्प्रलपतो बालाच्च परिसर्पतः ।
सर्वतः सारमादद्यादश्मभ्य इव काञ्चनम् ॥ १४४ ॥
न सर्ववित्कश्चिदिहास्ति लोके
नात्यन्तमूर्खो भुवि कश्चिदस्ति ।
ज्ञानेन नीचोत्तममध्यमेन
यो येन जानाति स तेन विद्वान् ॥ १४५ ॥

A 189 ईदृशस्य मनीषिणो नास्ति पाशच्छेदने शक्तिः । एवं चिन्तयन्भयतरलदृग्यावदवस्थितः । तावल्लघुपतनकेन क्षिप्रमेव हिरण्य आनीतः । तदवस्थं चित्राङ्गं दृष्ट्वाधृतिपरीतो हिरण्यस्तमाह । वयस्य । ज्ञानचक्षुरसि । कथमिमामापदं प्राप्त इति । सो ऽब्रवीत् । वयस्य । किमनेन पृष्टेन । बलवद्दैवम् । साधु चेदमुच्यते ।

किं शक्यं शुभमतिनापि तत्र कर्तुं
यत्रासौ व्यसनमहोदधिः कृतान्तः ।
रात्रौ वा दिवसवरे ऽपि वा समग्रे
यो ऽदृश्यः प्रहरति तस्य को विरोधी ॥ १४६ ॥

अपि च ।

कृतान्तपाशबद्धानां दैवोपहतचेतसाम् ।
बुद्धयः कुब्जगामिन्यो भवन्ति विदुषामपि ॥ १४७ ॥

A 190 तथा चोक्तं भगवता वेदव्यासेन ।

बलं बुद्धिश्च तेजश्च प्रतिपत्तिश्च भारत ।
भवन्ति भवकाले ऽपि विपद्यन्ते विपर्यये ॥ १४८ ॥

A 191 तत् । साधो । अनभिज्ञो ऽसि नियतिचेष्टितस्य । छिन्धि पाशमिमम् । यावदसौ लुब्धकः क्रूरकर्मा नायातीति । एवमुक्तो हिरण्यो ऽब्रवीत् । भद्र । मा भैषीः । वर्तते मयि पार्श्वस्थे लुब्धकात्कश्चिदपायः । किंतु कौतुकात्पृच्छामि । नित्यं चकितचार्यसि । कथं छलितः । स आह । यद्यवश्यं मया व्याख्यातव्यम् । तच्छ्रूयताम् । अहमनुभूतबन्धनो ऽपि पुनरधुना विधिवशाद्बद्धः । सो ऽब्रवीत् । कथमनुभूतबन्धनः पूर्वं भवान् । असावब्रवीत् ।

॥ कथा ५ ॥

अस्ति । अहं कदाचिद्यमुनाकच्छे शालिग्राममध्ये प्रियकमृग्यामुत्पन्नः । वयं शृङ्गातयः । तथा च । चमूरः कदली कन्दली प्रियक एणक एते मृगयोनयः स्तुताः पञ्चैव । मातृदुग्धप्रसादेन द्वे गती जानन्ति । ऊर्ध्वा । आञ्जसी चेति । एते न लुब्धकैः प्राप्यन्ते । प्रियकजातीयो ऽहं मनुष्यप्रियश्चिरेणाक्षिणी निमीलयामि । तथा सति मे माता यदा गता । तदाहं लुब्धकैः पोतक एव गृहीतः । स्त्रीक्षीरेण विवर्धितो यावत्तद्गृहे निवसामि । तावन्मे माता स्वयूथ्यैश्चरति । तयाभिहितम् । अहो दैवम् । अहमपुत्रवती * * * * * * * * क्व मे पुत्र इति । एवं मयाकर्णावधारितम् । किं मे लुब्धकैः । निजकृत्रिमयोः सहाययोर्निजः सहायो गरीयानिति । ततो लुब्धकगृहात्स्वैरं गत आसम् । अथ लुब्धकसकाशादागत इति भयचकितदृशं मातरं प्राप्तः । तयाहमानन्दितः । किमेतदाश्चर्यमिति पृष्टः । स्तन्यक्षीरेण विवर्धितः । तेनातिमात्रमहं षण्मासजातशिशुः स्वयूथ्यमध्यगतः । अभ्यधिकजवत्वाद्गच्छन्मृगानागतः प्रतिपालयामि । अस्माकं द्वे गती । ऊर्ध्वा । आञ्जसी च । तयोर्मातृकपयोविरहादहमाञ्जसीं वेद्मि । नोर्ध्वाम् । अथ कदाचिन्मृगांश्चरमाणान्नानुपश्यामि । आविग्नहृदयश्च क्व ते गता इति विलोकितवान् । पश्यामि तानूर्ध्वगत्यभिज्ञतया जालं विलङ्घ्याग्रतो गतान् । अहं त्वनभिज्ञः स्त्रीक्षीरदोषात् । तथा च ।

कार्यकाले तु संप्राप्ते नावज्ञेयं त्रयं सदा ।
बीजमौषधमाहारो यथा लाभस्तथाक्रयः ॥ १४९ ॥

अहं तेन क्षीराख्येनौषधेनोर्ध्वगत्यनभिज्ञतयाञ्जस्या गत्या नि-

ष्पतितो जालेनाकुलीकृतः । ततश्च व्याधैर्दुरात्मभिर्जीवग्राहं गृहीत्वा क्रीडार्थं राजपुत्रायोपनीतः । सो ऽपि मां दृष्ट्वातीव परितुष्टो व्याधान्प्रादेशिकेन संमानितवान् । मां चादरेणाङ्गोद्वर्तनस्नानभोजनधूपालंकारवासोविशेषैर्भोजनप्रकारैश्चासंभाव्यैः स्निग्धद्रवपेयान्नैः सखण्डगुडदाडिमचातुर्जातकविमिश्रैरन्यैश्च भोज्यैरतर्पयत् । अथान्तःपुरिकाजनस्य राजकुमाराणां च हस्ताद्धस्तं च कौतुकपरतया ग्रीवानयनकरचरणकर्णविकर्षणैः परस्परेर्ष्याभी राजाङ्गनाभिः संमानपरंपरतया क्लेशितो ऽहम् । चिन्तितं च मया । किं सुवर्णेन श्रोत्रबाधाकरेण । हा कष्टम् । कदा तद्वनं प्राप्स्यामीति । निवृत्तकौतुकानां च कदाचिद्विविक्ते वर्तमाने राजपुत्रशयनाधस्तान्मया प्रावृट्समये मेघशब्दश्रवणोत्कण्ठितहृदयेन स्वयूथच्युतेन स्वयूथ्याननुस्मृत्याभिहितम् ।

वातवृष्ट्यवधूतस्य मृगयूथस्य धावतः ।
पृष्ठतो यद्गमिष्यामि कदा तन्मे भविष्यति ॥ १५० ॥

एवमुच्चारयतो राजपुत्रेण बालभावाद्भावितचित्तेनैतावच्छ्रुत्वा संत्रस्तेन द्वाःस्थो ऽभिहितः । केनेदमभिहितमिति । संतापितहृदयः समन्तादवलोकयन्मामपश्यत् । अहं च लुब्धकैर्मानुषीं वाचं शिक्षित आसम् । दृष्ट्वा च मां मानुषेणैवानेन मृगेणाभिहितम् । विनष्टो ऽस्मीति मत्वा परमावेगं गतः । अथ कथंचिद्विस्खलितवागसौ बहिर्निश्चक्राम । परमसत्त्वाधिष्ठित इव महदस्वास्थ्यमापेदे । ततः सर्वभिषग्भूततन्त्रिकान्महत्यार्थमात्रया ज्वरपरीतः प्रार्थितवान् । एवं चाब्रवीत् । यो ममैतां रुजमपनयति । तस्याहमक्षयां पूजां करिष्यामीति । अहमपि तत्रासमीक्षितकारिणा जनेन लगुडेष्टकादिभिर्हन्यमानः केनापि साधुनावच्छन्नः । किमनेन

क्षतमिति। अथ ममायुःशेषतया तेनार्येण सर्वलक्षणविदा विज्ञापितो राजपुत्रः। अविमर्शपरेण लोकेनेमामवस्थां प्रापितस्त्वम्। पुनरपि तेनार्येणोक्तो यथा। प्रियको नामैष मृगो मानुषीं वाचं जानाति। नैष मानुषः। भद्र। अनेन प्रावृट्कालमेघशब्दप्रतिबोधितचित्तेन स्वयूथ्यानुस्मरणोत्सुक्यादभिहितम्। वातवृष्ट्यवधूतस्येति। किमत्र चित्रम्। प्रायेण पक्षिणः पशवश्च भयाहारमैथुनमात्रवेदिनो भवन्ति। इत्यधिगतमेव देवेन। अतो ऽयममानुषः। तथा च।

यादृशैः संनिवसते यादृशांश्चोपसेवते।
यादृगिच्छेच्च भवितुं तादृग्भवति पूरुषः॥ १५१॥
हीयते हि नरस्तात हीनैः सह समागमात्।
समैश्च समतामेति विशिष्टैश्च विशिष्टताम्॥ १५२॥

तत्। देव। मनुष्यसंपर्कात्प्रियकजातिवशाच्च मानुषीं वाचं ददातीति संमानितः। तथा च।

यथोदयगिरेर्द्रव्यं संनिकर्षेण दीप्यते।
* * * * * * * * * * * * * * * ॥ १५३॥

इति। तत्र किमसंबद्धं ज्वरकारणम्। अपि च।

मन्त्राणां परतो नास्ति बीजमुच्चरणं तथा।
असंबद्धप्रलापा न कार्यं साधयितुं क्षमाः॥ १५४॥

तथा च।

शङ्खः कदल्यां कदली च भेर्यां
तस्यां च भेर्यां सुमहद्विमानम्।
तच्छङ्खभेरीकदलीविमान-
मुन्मत्तशङ्काप्रतिमं बभूव॥ १५५॥

तत्क्व शङ्खः ' क्व कदली ' क्व भेरी ' क्व विमानमिति । तद्वि-यन्निदनसंवद्धतया त्वय्यागतम् ।

तच्च श्रुत्वापगतविकारो राजपुत्रः पूर्वप्रकृतिमापन्नः । विचार्य तस्यार्यस्य प्रज्ञाविभवं ततो महतीं पूजां कृत्वा मन्त्रिसमीपवर्ती सन्निकृत्वे कृतः । मां चापनीयाभ्यज्य प्रसूतेनाम्भसा प्रक्षालितशरीरं कृत्वार्जिपुरुषाधिष्ठितं तत्रैव वने प्रतिमुक्तवान् । तत्किं बहुना ' अनुभूतबन्धनो ऽप्यहं नियतिवशात्पुनर्बद्ध इति ।

अथार्धावसित एव वाक्ये सुहृत्स्नेहाचिप्तचित्तो मन्थरकस्तेनैवानुसारेण शरकाण्टककुशावमर्दनं कुर्वाणस्तानेव समागतः । तं च दृष्ट्वा सुतरामाविग्नचित्ताः संपन्नाः । अथ हिरण्यकमाह । भद्र ' शोभनं त्वया न कृतम् । स्वदुर्गव्यपेतस्त्वं न शक्तो लुब्धकादात्मानं रक्षितुम् । वयं तस्यागम्याः । यत्कारणम् ' संनिकृष्टे लुब्धके चित्राङ्गो विच्छिन्नपाशो यास्यति । लघुपतनको ऽपि वृक्षमाश्रयिष्यति । अहमप्यल्पकायतया विवरमनुप्रवेक्ष्यामि । भवांस्तु तद्गोचरगतः किं करिष्यतीति । मन्थरक आह । भद्र ' मैवं ब्रूयाः ।

दयितजनविप्रयोगाः स्वजनवियोगाश्च कस्य सह्याः स्युः ।
कस्य महोत्सवकल्पाः प्रियस्वजनसंगमा न स्युः ॥ १५६ ॥
प्रविरलमप्यनुभूताः शिष्टेष्टसमागमेषु ये दिवसाः ।
पश्यटनप्रतिमास्ते जीवितकान्तारशेषस्य ॥ १५७ ॥
सुहृदि निरन्तरचित्ते गुणवति दारे प्रभौ च दुःखज्ञे ।
विश्राम्यतीव हृदयं दुःखस्य निवेदनं कृत्वा ॥ १५८ ॥

तत् ' भद्र '

औत्सुक्यगर्भा भ्रमतीव दृष्टिः
पर्याकुलं क्वापि मनः प्रयाति ।
वियुज्यमानस्य गुणान्वितेन
निरन्तरं प्रेमवता जनेन ॥ १५९ ॥

A 193 एवमभिवदत एवासौ व्याध आयातः । तं दृष्ट्वैव हिरण्यः पाशं छित्त्वा यथा पूर्वं व्याहृतमेवापयातः । लुब्धको ऽपि तं पाशं मृगच्छिन्नमिति मत्वा परं योगमचिन्तयत् ' आह च । न दैवं विना मृगः पाशच्छेदं कृतवान् । कच्छपं चासंभाव्यां

भूमिमागतं दृष्ट्वा साधारं चित्तमकरोत् । यद्यपि मे मृगो दैववशात्पाशं चित्त्वापयातः । तथापि दैवेन कच्छप उत्पादित इति । एवमवधार्य क्षुरिकया कुशानादाय दृढां रज्जुं कृत्वा चरणावकृष्टं कच्छपं सुबद्धं कृत्वा धनुष्यवलम्ब्य यथागतमेव प्रायात् । तदा नीयमानं दृष्ट्वा हिरण्यः परं विषादमगमत् । आह च ।

एकस्य दुःखस्य न यावदन्तं
गच्छाम्यहं पारमिवार्णवस्य ।
तावद्द्वितीयं समुपस्थितं मे
छिद्रेष्वनर्था बहुलीभवन्ति ॥ १६० ॥

यावदस्खलितं तावत्सुखं याति समे पथि ।
सकृच्च स्खलितं किंचिद्विषमं हि पदे पदे ॥ १६१ ॥

कष्टं भोः ।

यदि तावत्कृतान्तेन धनेषु प्रलयः कृतः ।
मार्गश्रान्तस्य विश्रामे मित्रच्छायापि दूषिता ॥ १६२ ॥

प्राणवृद्धिकरं मित्रं शंसन्तीह विचक्षणाः ।
इहलोकसुखं मित्रं न मित्रं पारलौकिकम् ॥ १६३ ॥

A 194 तत्किं ममोपर्यनवरतमेव दैवं प्रहरति । आदौ तावदर्थपरिभ्रंशः । दारिद्र्ययोगात्स्वजनपरिभवः । तन्निर्वेदात्स्वजनपरित्यागः स्निग्धसुहृद्वियोगश्चेति । इयं तावन्मम दुःखपरंपरा । अपि च ।

कायः संनिहितापायः संपदः पदमापदाम् ।
समागमाः सापगमाः सर्वमुत्पादभङ्गुरम् ॥ १६४ ॥

A 195 तथा चोक्तं भगवता वेदव्यासेन ।

सर्वे क्षयान्ता निचयाः पतनान्ताः समुच्छ्रयाः ।
संयोगा विप्रयोगान्ता मरणान्तं च जीवितम् ॥ १६५ ॥

यथा यथा महत्तन्त्रं विस्तारश्च यथा यथा ।
तथा तथा महद्दुःखं सुखं च न तथा तथा ॥ १६६ ॥

तथापि ।

कं न स्पृशन्ति पुरुषं व्यसनानि काले
को वा निरन्तरसुखी य इहास्ति लोके ।
दुःखं सुखं च परिणामवशादुपैति
नक्षत्रचक्रमिव खे परिवर्तमानम् ॥ १६७ ॥

अप्रमत्ते ऽपि पुरुषे हितकार्यावलम्बिनि ।
दैवमुन्मार्गरसिकमन्यथैव प्रपद्यते ॥ १६८ ॥

तेन हि ।

क्षते प्रहारा निपतन्त्यभीक्ष्ण-
मन्नक्षये कुप्यति जाठराग्निः ।
आपत्सु वैराणि समुद्भवन्ति
च्छिद्रेष्वनर्था बहुलीभवन्ति ॥ १६९ ॥

शोकारातिभयत्राणं प्रीतिविस्रम्भभाजनम् ।
केन रत्नमिदं सृष्टं मित्रमित्यक्षरद्वयम् ॥ १७० ॥

A 196 एवमाक्रन्दत एव लघुपतनचित्राङ्गावपि तेन समेतौ । अथ हिरण्यस्तानब्रवीत् । यावदयं मन्थरको ऽस्मद्गोचरगतः । तावदसावुपायेन शक्यो मोचयितुम् । तद्गच्छ । चित्राङ्ग । त्वमस्य व्याधस्याग्रतो नदीसमीपे विप्रकृष्टे भूप्रदेशे निपत्य मृतमात्मानं कृत्वा दर्शय । अयमपि लघुपतनकस्त्वदुपर्यवस्थितः शृङ्गपञ्जरान्तरविन्यस्तचरणो नेत्रोत्पाटनरूपं छद्मनात्मानं दर्शयतु । अयं तु मूर्खो ऽवश्यं लोभात्कच्छपं परित्यज्य सारङ्गं यास्यति । अहमप्यतिक्रान्ते तस्मिन्गमनसमकालं मन्थरं बन्धनान्मोचयिष्यामि पाशं छित्त्वेति । अभ्याशोपगते तस्मिन्नाश्वपयानं यथा क्रियते । तथा प्रयतितव्यम् । एवमनुष्ठिते लुब्धको ऽपि मृतरूपं मृगं दृष्ट्वा कच्छपं सरित्तीरे शुष्कशाकमिव परित्यज्य तत्सकाशं गन्तुमारब्धः । तस्मिन्गते हिरण्येन मन्थरस्य पाशाः खण्डशः कृताः । कच्छपो ऽपि तत्स्थानाद्ध्रदं प्रविष्टः । लघुपतनकचित्राङ्गावपि लुब्धकं वञ्चयित्वापयातौ । एवमनुष्ठिते लुब्धको ऽपि दृष्ट्वा तदिन्द्रजालमिव मन्यमानः किमिदमित्यनुचिन्त्य कच्छपसकाशं गतो ऽपश्यदङ्गुलप्रमाणां खण्डशश्छिन्नां रज्जुम् । कच्छपमपि योगिनमिवादृश्यतां गतम् । इति स्वशरीरे ऽपि संशयमचिन्तयत्संक्षुभितहृदयश्च तस्माद्वनाच्छीघ्राच्छीघ्रतरपदैः स्वगृहमेव प्रतिजगाम । हिरण्यो ऽपि मुक्तबन्धनं मन्थरमाहूय नदीतटोपरि वृक्षच्छायायां चित्राङ्गलघुपतनकाभ्यां समेतः । अथ सर्वे ते कल्यशरीराः पुनरेकीभूताः । यथायथं च ते कालेन सुखमनुभवन्त इति ।

तिरश्चामपि यत्रेदृक्संगतं लोकसंमतम् ।
मर्त्येषु यदि कस्तत्र विस्मयो ज्ञानशालिषु ॥ १७१ ॥

॥ इति तन्त्राख्यायिके मित्रप्राप्तिर्नाम द्वितीयं तन्त्रम् ॥



## ॥ काकोलूकीयं नाम तृतीयं तन्त्रम् ॥

A 197 अत इदमारभ्यते संधिविग्रहसंबद्धं काकोलूकीयं नाम तृतीयं तन्त्रम् ' यस्यायमाद्यः श्लोकः ।

न विश्वसेत्पूर्वपराजितस्य
शत्रोश्च मित्रत्वमुपागतस्य ।
दग्धां गुहां पश्यत घूकपूर्णां
काकप्रणीतेन हुताशनेन ॥ १ ॥

A 198 अस्ति ' कस्मिंश्चिद्वनोद्देशे महान्न्यग्रोधवृक्षः स्निग्धबहलपर्णगुल्मच्छायया स्वागतमिवाध्वगानां प्रयच्छति । तत्र मेघवर्णो नाम वायसः प्रतिवसति स्म काकसहस्रपरिवारः । तस्य च शत्रुरपमर्दो नामोलूकराज उलूकसहस्रपरिवारः । स वैरानुशयादुलूक उपलब्धदुर्गवृत्तान्तः कालबलशक्त्या महतोलूकसंघातेन तस्योपरि संनिपतितः ' महच्च तेषां कदनं कृत्वापयातः ।

A 199 अन्येद्युश्च प्रभातसमये हतशेषान्भग्नचञ्चुपक्षचरणानन्यांश्च समेत्य शिबिरानुसारप्रविचयोपलब्धिं कृत्वा मन्त्रिभिः सार्धं मेघवर्णो मन्त्रयितुमारब्धः । प्रत्यक्षमेतन्महद्विशसनमस्माकं सपत्नापमर्देन कृतम् । दृष्टदुर्गमार्गो ऽसाववश्यमद्य रात्रौ लब्धावसरो ऽस्मदभावाय पुनरेष्यति । तदहीनकालमुपायश्चिन्त्यतां तद्विघातायेति ।

A 200 अथ केचिद्वृद्धास्तमाहुः । साधुरसि ' राजन् । गुणोपेतो ऽसि । यथाशास्त्रमनुवर्तितं भवता ' यस्त्वमात्ययिके मन्त्रिपर्षदमेव पृच्छसि । इह हि शास्त्रे दृष्टान्यष्टादश तीर्थानि राज्ञाम् । तद्यथा । मन्त्रिपुरोहितासनपालकयुवराजदौवारिकान्तर्वंशकशास्तृसमाहर्तृसंनिधातृप्रदेष्टृनायकपौरव्यावहारिककार्मान्तिकमन्त्रिपर्षदध्यक्षदण्डदुर्गान्तपालाटविका इति । तत्रादौ मन्त्रिग्रहणमवश्यं कार्यम् ' पश्चान्मन्त्रिपर्षद्ग्रहणमवश्यं क्रियत इति । यदा च राजा स्वास्थ्यं भजते ' तदा दत्ताधिकारैः सार्धं मन्त्रयेत् । यदा पुनरात्ययिकमरातिभिः समं महत् ' तदा मन्त्रिपर्षदमाहूय ब्रूयात् । तत्र यद्भूयिष्ठाः कार्यसिद्धिकरं ब्रूयुः ' तत्कुर्यादिति । तन्मानिता वयमनेन वचनेनेति । किंत्विह हि मनुबृहस्पतिभृगुपराशरशालङ्कायनचाणक्यप्रभृतिभिरा-

चार्थियानि नीतिशास्त्राणि गदितानि ' तानि विशेषत एवैभिर्ज्ञायन्ते । तत्र यद्र्हस्यम् ' तन्निराकुलो भूत्वैभिरेव दत्ताधिकारैः सार्धं संप्रधारयतु भवानिति । एवमुक्त्वैकान्तीभूताः ।

A 201 अथ स राजा मेघवर्णस्तान्प्रत्येकं प्रष्टुमारब्धः । तस्य चान्वयागताः पञ्च सचिवाः । तद्यथा । उद्दीपी ' संदीपी ' आदीपी ' प्रदीपी ' चिरजीवी चेति । तेषामादावुद्दीपिनं पृष्टवान् । भद्र ' एवमवस्थिते किमनन्तरं करणीयं मन्यसे । सो ऽब्रवीत् । किं मयाभ्यधिकं किंचिज्ज्ञायते । देव ' यदेव शास्त्रे ऽभिहितम् ' तदेव वक्ष्यामि । किंतु बलवता विगृहीतस्य तदनुप्रवेशो विदेशगमनं वा ।

A 202 तच्छ्रुत्वा संदीपिनमाह । भद्र ' भवान्कथं मन्यत इति । सो ऽब्रवीत् । देव ' यदेवानेनाभिहितम् ' बलवता विगृहीतस्य विदेशगमनम् ' एवमभिमतम् । तत्रापि नाकस्मादेकपद एव दुर्गपरित्यागः कार्यः ' यतो युक्तमेवं स्थिते दोलाव्याजेन यापयितुम् । यदा भयं भविष्यति ' तदापयानं करिष्यामः ' यदा स्वास्थ्यम् ' तदा दुर्ग एव स्थास्याम इति ।

A 203a ततस्तस्यापि वचनमवधार्य प्रदीपिनं पृष्टवान् । भवतो ऽत्र को ऽभिप्रायः । सो ऽब्रवीत् । राजन् ' आत्ययिकमिदमनवरतं गतागतकरणम् । दीनान्धकुब्जवामनकुणिखञ्जव्याधितोपस्करादिभिर्नयनानयनैरेव वयं विनष्टाः । यत एवं गते संधिरेव श्रेयस्कर इति । यत्कारणम् '

प्रवृद्धचक्रेणाक्रान्तो राज्ञा बलवताबलः ।
संधिनोपक्रमेत्तूर्णं कोशदुर्गात्मभूतये ॥ २ ॥

A 203b यतस्तेषां संनतिं कृत्वा सुखमनुद्विग्ना इहैव स्थास्याम इति ।

A 204 तस्यापि वचनमवधार्यादीपिनं पृष्टवान् । भद्र ' एवमवस्थिते ऽस्माकं किं प्राप्तकालं मन्यसे । स आह ' वरमरण्यहरिणरोमन्थकषायाण्यम्भांस्यासेवितानि ' न च प्रभुत्वरसास्वादिनः परोपस्थाने कृपणजीवितमिति । अपि च ।

ज्यायान्न नमेदसमे असमोपनमनमहो महत्कष्टम् ।
गर्हितमेतत्पुंसामतिनमनं साहसधनानाम् ॥ ३ ॥

अपि च ।

दण्डानामिव नमतां पुंसां छाया विवृद्धिमुपयाति ।
क्षयमेति चाति नमतां तस्मात्प्रणमेन्न चाति नमेत् ॥ ४ ॥

A 205 तैः सहास्माकं संदर्शनमेव न विद्यते । संदर्शनेन विना कथं संधिर्भविष्यति । तत्सर्वथा युद्धमेव नस्तैः सह पुष्कलमिति ।

A 206 ततो मेघवर्णस्तेषां चतुर्णामपि पृथक्पृथगभिप्रायं ज्ञात्वा चिरजीविनमाह । तात '

त्वमस्माकं चिरन्तनः सचिवः । अजस्रं च हितान्वेषी । किमेवमवस्थिते ऽप्यधुना प्राप्तकालं मन्यसे । यच्च त्वं ब्रूषे । तदेव नः श्रेयस्करमिति । साधु चोक्तम् ।

निश्चित्य प्रथमां वाचं त्वमतो वक्तुमर्हसि ।
त्वामेवानुगमिष्यामस्तिमिरे ऽग्निमिवाध्वगाः ॥ ५ ॥

A 207a एवमुक्ते चिरजीव्याह । देव । किमेभिर्नोक्तम् । यत्र मम वचनावकाशः स्यात् । इह हि संधिविग्रहयोः संधिर्वा स्याद्विग्रहो वा पूर्वोक्तावेव । तथापि यदादीपिनाभिहितम् । तत्प्रत्यावर्तनायोच्यते । भद्र । कथमेषामस्माकं च युद्धे सामान्यम् । तावदसाधारणं युद्धमस्माकम् । संनिपातसमकालमेव शिरांसि निकृन्तन्ति । वयं तु कृच्छ्रेण तेषां नेत्रोत्पाटनं करिष्याम इति । एवमवगम्य युद्धपरिग्रहो न कार्यः । उक्तं च ।

परेषामात्मनश्चैव यो ऽविचार्य बलाबलम् ।
कार्यायोत्तिष्ठते मोहाद्व्यापदः स समीहते ॥ ६ ॥
लघुष्वपि विधातव्यं गौरवं परिपन्थिषु ।
कृत्यन्तरविधातॄणां भवन्ति ह्यफलाः क्रियाः ॥ ७ ॥
क्षमावन्तमरिं प्राज्ञं काले विक्रमसेविनम् ।
परात्मगुणदोषज्ञमनुसृत्य न विश्वसेत् ॥ ८ ॥
प्रार्थिता पुरुषैः शूरैरुत्साहादिसमन्वितैः ।
नित्यं व्यावृत्तपदवी लक्ष्मीर्याति न विक्रियाम् ॥ ९ ॥
यमेवाभ्युपयाति श्रीरुपायपरितोषिता ।
निरुद्विग्ना हि तत्रास्ते न करग्रहपीडिता ॥ १० ॥
शातयत्येव तेजांसि दूरस्थो ऽप्युन्नतो रिपुः ।
सायुधो ऽपि निकृष्टात्मा किमासन्नः करिष्यति ॥ ११ ॥
न भीतो न परामृष्टो नापयातो न वर्जितः ।
नाशस्त्रो ऽप्यवमन्तव्यो नैको वेति नयाधिकैः ॥ १२ ॥
यस्य सिध्यत्ययत्नेन शत्रुः स विजयी नरः ।
य एकतरतां गत्वा जयी विजित एव सः ॥ १३ ॥
सिद्धिं वञ्चनया वेत्ति परस्परवधेन वा ।
निरुपायं सुखं स्यान्तं द्वयोः किमिति चिन्त्यताम् ॥ १४ ॥
विबन्धुर्निहतामित्रो रोदित्येकः श्रियः पतिः ।
सेव्यमानो हसत्येकः शत्रुभिः ससुहृज्जनः ॥ १५ ॥
मदावलिप्तैः पिशुनैर्लुब्धैः कामात्मकैः शठैः ।
दर्पोद्धतैः क्रोधपरैर्दण्डनीतिः सुदुर्ग्रहा ॥ १६ ॥

विषाणसंघट्टसमुत्थितानल-
स्फुलिङ्गमालाकुलिते ऽपि दन्तिनाम् ।
रणे ऽपि पीत्वा तु यशांसि विद्विषां
भवत्यविद्वान्न हि भाजनं श्रियः ॥ २६ ॥

A 209 तत्सर्वथा गुणवत्सहायपरिग्रहो विजिगीषूणामेकान्तसिद्धये । उक्तं च ।

वदन्ति नानाविधमर्थचिन्तका
विभूतिलाभाभ्युदयप्रयोजनम् ।
ममैष पक्षो ऽथ न चैतदन्यथा
सहायसंपत्प्रभवा हि संपदः ॥ २७ ॥

अन्तःसारैरकुटिलैरच्छिद्रैः सुनिरूपितैः ।
सहायैर्धार्यते राज्यस्तम्भैरिव मन्दिरम् ॥ २८ ॥

न वंशमार्गक्रमलालनागुणं
निरीक्षते नैव वपुर्न कान्तिम् ।
य एव शूरः सुसहायवान्नर-
स्तमेव लक्ष्मीरसहापि सेवते ॥ २९ ॥

गुणेष्वाधारभूतेषु फले कस्यास्ति संशयः ।
न्यस्तस्यात्मा सतां वृत्ते विभूतिस्य न दुर्लभा ॥ ३० ॥

अपि कीर्त्यर्थमायान्ति नाशं सद्यो ऽतिमानिनः ।
न चेच्छन्त्ययशोमिश्रमप्येवानन्त्यमायुषः ॥ ३१ ॥

विशति वह्निमपि स्थिरनिश्चयः
सुगममेव महोदधिलङ्घनम् ।
असुकरं व्यवसायदृढात्मना-
महमवैमि न किंचिदमर्षिणाम् ॥ ३२ ॥

जयायोत्क्षिप्यतां पादो दक्षिणः किं विचार्यते ।
मूलं हि प्राज्ञराचार्या दीर्घसूत्रत्वमापदाम् ॥ ३३ ॥

श्रुतापविद्धैरेतैर्वा वृथा किं शुकभाषितैः ।
प्राज्ञस्त्वं त्यज्यतां मौनं यस्य वेला तदुच्यताम् ॥ ३४ ॥

क्रियावतः केवलवाग्मिनश्च
वरं क्रियावान्पुरुषो न वाग्मी ।
प्रायेण पुंसां सदसत्सु युक्ताः
क्रियाः चरन्ति ह्यमृतं विषं च ॥ ३५ ॥

मन्त्रमूलं हि विजयं प्रवदन्ति मनीषिणः ।
मन्त्रस्य पुनरात्मा च बुद्धिश्चायतनं परम् ॥ ३६ ॥
षडेव खलु मन्त्रस्य द्वाराणि तु नराधिप ।
विदितान्येव ते तात कीर्तयिष्यामि कीर्तिमन् ॥ ३७ ॥
आत्मानं मन्त्रिदूतं च छन्नं विपवणक्रमम् ।
आकारं ब्रुवते षष्ठमेतावान्मन्त्रनिश्चयः ॥ ३८ ॥
असंगृहीतस्य पुनर्मन्त्रस्य शृणु यत्फलम् ।
अहीनं धर्मकामाभ्यामर्थं प्राप्नोति केवलम् ॥ ३९ ॥
आयव्ययं सदानुप्यं छेदनं संशयस्य च ।
अनिशं तस्य च ज्ञानं मन्त्रिणां त्रिविधं फलम् ॥ ४० ॥

A 210 तद्यथा यो मन्त्री विस्त * * र्वेन गच्छति । तथा प्रयतितव्यम् । यत्कारणम्

मिथ्या प्रणिहितो मन्त्रः प्रयोक्तारमसंशयम् ।
दुरिष्ट इव वेतालो नानिहत्योपशाम्यति ॥ ४१ ॥
आत्मपक्षक्षयायैव परपक्षोदयाय च ।
मन्त्रद्वैधममात्यानां तन्न स्यादिह भूतये ॥ ४२ ॥
आहुः सूक्ष्मतरं किंचिदमात्यपरिरक्षणम् ।
सूक्ष्मात्सूक्ष्मतरं तेभ्यो यदात्मपरिरक्षणम् ॥ ४३ ॥
मन्त्री यस्याप्रियस्तस्य राज्यमात्मा च न प्रियः ।
प्रियो यस्य प्रियं तस्य राज्यमात्मा च भूपतेः ॥ ४४ ॥

अपि च ।

आयव्ययौ यस्य च संविभक्तौ
छन्नश्च चारो निभृतश्च मन्त्रः ।
न चाप्रियं मन्त्रिषु यो ब्रवीति
स सागरान्तां पृथिवीं प्रशास्ति ॥ ४५ ॥
असकृच्छ्रुतमप्यर्थं पृच्छ धीरान्पुनः पुनः ।
एषा हि मनसो वृत्तिश्चपला मोहजालिनी ॥ ४६ ॥

A 211 तद्यदि मयावश्यं मन्त्रयितव्यम् । तदपनीयन्तामेते मन्त्रिमात्रव्यपदेशकेवलोपजीविनः कथाकुशलाः । न च करणीयेष्वात्ययिकेषु । अषट्कर्णं रहस्यं सफलं भवति ।

A 212 एवं च वर्णिते मेघवर्ण आह । तात । बालभावादनभिज्ञो ऽस्मि । यथा ब्रवीषि । तथा करोमि । त्वदायत्तं हि सर्वमिदम् । त्वमधुनार्थवादी ज्ञानविज्ञानसंपन्नः

पितृक्रमेण हितैषी । किंतु कौतूहलमुच्यताम् । कथं पुनरस्माकमुलूकानां वैरमिति । सो ऽब्रवीत् । भद्र । वाक्कृतात् ।

सुचिरं हि चरन्नित्यं ग्रीष्मे सस्यमबुद्धिमान् ।
द्वीपिचर्मप्रतिच्छन्नो वाक्कृताद्रासभो हतः ॥ ४७ ॥

A 213 सो ऽब्रवीत् । कथं चैतत् । चिरजीव्याह ।

## ॥ कथा १ ॥

अस्ति कस्यचिद्रजकस्य वस्त्रनयनातिभारपीडया गर्दभो ऽवसन्नः । स एवं चिन्तयामास । कष्टम् । न शोभनमापतितम् । मम कर्मव्याघातो मूल्यहानिश्च । अधुना कथं करणीयम् । अथवास्त्युपायः । रूपकचयेण द्वीपिचर्म लभ्यते । तेनावच्छाद्याहमेनं रात्रौ हरितसस्ये मोक्षयिष्यामि । तद्भक्षणादसंशयमल्पैरहोभिरयं बलवान्भविष्यति । तथा चानुष्ठिते भक्ष्यमाणेषु सस्येषु कार्षिकः स्वक्षेत्राणि रक्षितुमारब्धः । कदाचिच्च क्षेत्रमध्येनायातः स दृष्टः । द्वीप्ययम् । नष्टो ऽस्मीति मत्वार्द्रकम्बलमुपरि दत्त्वोद्यतधनुष्पाणिः शनैः शनैरपक्रामितुमारब्धः । अथ गर्दभस्तं दृष्ट्वा गर्दभीयमिति निष्कृष्टायुः परं वेगमास्थायोपसर्पितुमारब्धः । असावपि शीघ्रतरवेगो धावति । गर्दभश्चैवमचिन्तयत् । कदाचिदियं द्वीपिचर्मव्यवस्थितशरीरं मां दृष्ट्वान्यत्रैवावगच्छेत् । अतो ऽहमस्याः स्वां प्रकृतिमास्थाय वाशितेन मनोह्लादनं करिष्यामि । इति वाशितुमारब्धः । तच्च श्रुत्वा रक्षिपुरुषः सुनिपुणं साधयित्वा गर्दभो ऽयमिति प्रतिनिवृत्य तमिषुणाभ्यहनत् । तत्समयमेवासौ पञ्चत्वमगमत् ।

A 214 अतो ऽहं ब्रवीमि । सुचिरं हि चरन्नित्यमिति । तच्चाख्यानमवधार्य मेघवर्ण आह । कथं वाक्कृतादस्माकमुलूकैः सह वैरमुत्पन्नमिति । सो ऽकथयत् ।

॥ कथा २ ॥

अस्ति । अराजके सर्वपक्षिणां चित्तमुत्पन्नम् । कतमं राजानं पक्षिणामभिषिञ्चाम इति । ततस्तेषां मतमुत्पन्नम् । उलूको ऽभिषिच्यतामिति । तस्य यथाविध्यभिषेकोचितद्रव्यसंभारं कृत्वा छत्रचामरव्यजनसिंहासनभद्रपीठक्षौमवासोनन्द्यावर्तादिनाभिषेकः प्रारब्धः । अथ नभसा व्रजन्तमविज्ञातनामानं पक्षिणमपश्यन् । ते तु तं दृष्ट्वा स्तम्भिताभिषेकाः । अवश्यमयमपि समुदाये ऽस्यन्तरीकर्तव्यः । यत्कारणम् । महदिदं पार्थिवं राजकार्यम् । पृष्टश्चासावागतः । भद्र । किं तवाप्येतदभिरुचितम् । प्रजापालत्वं दिवान्धस्येति । असावाह । किमन्ये पक्षिण उत्सादं गताः । हंसकारण्डचक्रवाकक्रौञ्चमयूरकोकिलहारीतजीवजीवकादयः । येनायमप्रसन्नदृष्टिरुलूको राज्ये ऽभिषिच्यते । अपि च ।

वक्रनासं सुजिह्माक्षं क्रूरमप्रियदर्शनम् ।
अक्रुद्धस्य मुखं पापं क्रुद्धः किं नु करिष्यति ॥ ४८ ॥
स्वभावरौद्रमत्युग्रं क्षुद्रमप्रियवादिनम् ।
उलूकमभिषिञ्चध्वं न वः श्रेयो भविष्यति ॥ ४९ ॥

मोघं दृष्टिदिग्दाहं करोत्यपदेशक्षमस्य । उक्तं च ।

व्यपदेशे ऽपि सिद्धिः स्यादशक्तश्चेन्नराधिपः ।
शशिनो व्यपदेशेन वसन्ति शशकाः सुखम् ॥ ५० ॥

अतः शेषाः पतत्रिण आहुः । कथं चैतत् । सो ऽब्रवीत् ।

## ॥ कथा ३ ॥

अस्ति । कदाचिद्द्वादशवार्षिक्यनावृष्टिरापतिता । तस्यां च सर्वसत्त्वानां महद्व्यसनमुत्पन्नम् । विशेषेण तु दन्तिनाम् । अथ चतुर्दशनो नाम हस्तिराजः । सो ऽन्यैर्हस्तिपतिभिर्विज्ञापितः । परित्रायस्वास्मान्वारितर्पणेनेति । सो ऽब्रवीत् । उपलभ्यताम् । कुत्र स्थाने ह्युदकम् । तत्राहमुदकेन युष्मान्वितृष्णान्करोमि । यतो ऽष्टासु दिक्षु प्रेरिता उदकान्वेषणाय वेगवन्तः । तत्रानुपूर्वदिक्चारिभिरुपलब्धं चन्द्रसरो नाम विमलजलसंपूर्णम् । किं बहुना । व्योमैकदेशपरिमाणम् । आवेदिते च तस्मिन्हस्तिराजेन प्रापिताः । तत्सरो ऽवतरद्भिश्च तैः समन्तादसुखावतारे सरसि पूर्वकृतावासास्तस्मिञ्छशाः संपिष्टशिरोग्रीवा बहवः कृताः । कृतावगाहो द्विरदपतिरपयातश्च तस्मात्सरसः । अथ हतशेषाः शशाः संप्रधारयितुमारब्धाः । अधुना किं करणीयम् । दृष्टमार्गैरेभिः पुनरिहावश्यमागन्तव्यम् । तद्यावदेत इह नागच्छन्ति । तावदुपायश्चिन्त्यतामिति । अथ तत्र विजयो नाम शशस्तानाह । शक्यमेतत् । न पुनर्यथेहागमिष्यन्ति ते । इयं मे प्रतिज्ञा । किंतु मम कर्मसाक्षिणः केवलं प्रसादः क्रियतामिति । तच्छ्रुत्वा शिलीमुखो नाम शशराजो ऽब्रवीत् । अवश्यमेतदेव । यत्कारणम् ।

नीतिशास्त्रार्थतत्त्वज्ञो देशकालविभागवित् ।
विजयः प्रेष्यते यत्र तत्र सिद्धिरनुत्तमा ॥ ५१ ॥

हितवक्ता मितवक्ता संस्कृतवक्ता न चातिबहुवक्ता ।
अर्थाद्विमृश्य वक्ता वक्तायं सर्ववस्तूनाम् ॥ ५२ ॥

अस्य च मतिपरिच्छेदान्मम दूरस्थस्यापि शक्तित्रयं तैरुपलब्धं भविष्यति । कथम् ।

दूतं वा लेखं वा दृष्ट्वाहं नरपतेरदृष्टस्य ।
जानामि तं नरेन्द्रं प्राज्ञं प्रज्ञाविहीनं वा ॥ ५३ ॥

तत्प्रतिमानयस्व । उक्तं च ।

दूत एव हि संदध्याद्दूतो भिन्द्याच्च संहतान् ।
दूतस्तत्कुरुते कर्म सिध्यन्ति येन मानवाः ॥ ५४ ॥

अनेन च गतेनासंशयमहमेव गतो भविष्यामि । यत्कारणम् । कार्यनिष्पत्तिः स्यात् । इति शशराजमामन्त्र्य विजयशशो हस्तिराजसमीपं प्रायात् । गत्वा च द्विरदपतिं दृष्ट्वा चिन्तयामास । अशक्यमनेन महास्मद्विधानां संगम इति । यदाहुः ।

स्पृशन्नपि गजो हन्ति जिघ्रन्नपि भुजंगमः ।
हसन्नपि च वेतालो मानयन्नपि दुर्जनः ॥ ५५ ॥

तत्सर्वथाप्रधृष्यायां भूमौ संदर्शनमस्य प्रयच्छामि । यथोच्चैस्तरां विषमशिलाशिखरमाश्रित्याब्रवीत् । अपि भवतः सुखम् । तच्च श्रुत्वा वीक्ष्य हस्तिराजः शशमाह । कुतो भवानिति । असावाह । दूतो ऽहमिति । तेनाभिहितः । केन प्रेषितः । कथय कार्यमिति । शश आह । जानात्येव भवान् । यथार्थवादिनो दूतस्य न दोषः करणीयः । *उक्तं च । दूताद्युद्धृतेष्वपि शस्त्रेषु यथोक्तवक्तारः । तेषामन्तेवासिनो ऽप्यवध्या इति ।* सो ऽहं चन्द्राज्ञया ब्रवीमि । कथं नामात्मानं परं चैवापरिच्छिद्य भवान्परापकारे प्रवर्तते । उक्तं च ।

परेषामात्मनश्चैव यो ऽविचार्य बलाबलम् ।
कार्यायोत्तिष्ठते मोहाद्ध्यापदः स समीहते ॥ ५६ ॥

स त्वं चन्द्रसरो ऽन्यायेन प्रधर्षितवान् । तत्र चास्मत्संरक्षणीयाञ्छशान्व्यापादितवानसि । न चैतद्युक्तम् । ते तु मयैव भर्तव्याः । येनाहं तानुरसा धारयामि । शशाङ्क इति च लोके प्रख्यातनामास्मि । स त्वं यदि न निवर्तसे ऽस्माद्व्यापारात् । ततो ऽस्मत्तो महान्तमनर्थं प्राप्स्यसि । *निवृत्तस्य महान्विशेषो भविष्यति । अस्म*ज्ज्योत्स्नयाप्यायितशरीरः स्याः । अन्यथास्मद्रश्मिसंनिरोधाद्घर्माभितापितशरीरः सद्यो विनाशमेष्यसीति । एवमुक्तो ऽतीव क्षुभितहृदयस्तमाह । भद्र । सत्यम् । मयापकृतम् । सो ऽहमधुना शशिना सह विरोधं न करिष्यामीति । तत्प्रदर्शय पन्थानम् । क्व तं पश्येयमिति । स आह । आगच्छतु भवान् । यावदहं दर्शयामि । इत्युक्त्वाशु चन्द्रसरो गत्वा संपूर्णकलामण्डलमुदकगतं चन्द्रमदर्शयत् । असावपि देवताप्रणामं परमशुचिर्भूत्वा करोमीति मत्वा द्विमनुष्यबाहुप्रमाणं करमम्भसि प्रक्षिप्तवान् । अथ संक्षुभितोदकचलन्मण्डल इतश्चेतश्चक्रारूढ इव बभ्राम । तेन चन्द्रसहस्रमपश्यत् । अथाविग्नहृदयः प्रतिनिवृत्य विजयो ऽब्रवीत् । कष्टं कष्टम् । द्विगुणतरमाकोपितस्त्वया चन्द्रमाः । इभः पृष्टवान् । केन हेतुना । स आह । उदकस्पर्शनेनेति । सो ऽब्रवीत् । केनोपायेनायं प्रसाद्यते । विजय आह । अस्पृशता पानीयमिति । एवमुक्तः संलीनवालधिराकृष्य करं निकृष्टजानुरवनितलविन्यस्तशिराः प्रणम्य भगवन्तं चन्द्रमसं हस्ती शशमवोचत् । भद्र । शेषकालं त्वया प्रत्याय्यः सर्वकार्येषु भगवान् । इत्युक्त्वानवलोकयन्नेवापुनरागमनाय यथागतं प्रायात् ।

अतो ऽहं ब्रवीमि । व्यपदेशे ऽपि सिद्धिः स्यादिति । अपि च ।

क्षुद्रो ऽयं दुरात्मा न शक्तः प्रजाः पालयितुम् ।

क्षुद्रमर्थपतिं प्राप्य कदा विवदतोः सुखम् ।
उभावपि क्षयं यातौ यथा शशकपिञ्जलौ ॥ ५७ ॥

त आहुः । कथं चैतत् । सो ऽब्रवीत् ।



॥ कथा ४ ॥

अस्ति । अहं कस्मिंश्चिद्वृक्षे प्रतिवसामि । तत्रैवाधस्तात्कपिञ्जलः प्रतिवसति स्म । तत आवयोः परस्परमेव संवासगुणादभेद्या प्रीतिरुत्पन्ना । प्रतिदिवसं च कृताहारविहारयोः प्रथमप्रदोषकाले सुभाषितप्रश्नप्रतिप्रश्नैः कालो ऽतिवर्तते । अथ कदाचिदालापवेलायां कपिञ्जलो नायाति । ततो मम हृद्गतातीवाकुलता समुत्पन्ना । एवं चाचिन्तयम् । किमसौ विनष्टो बद्धो वा । अथवान्यावास एतस्य प्रीतिरुत्पन्ना । येन नायातीति । शून्ये च तस्मिंस्तदीयावासके दीर्घकर्णो नाम शश आगतः । तेनास्यावासो ऽधिष्ठितः । ततो ऽसौ कपिञ्जलो ऽर्धमासमात्रेणायातः । शशं दृष्ट्वाब्रवीत् । अपगम्यतां मदीयनिकेतनादिति । स तमाह । मूर्ख । न ते विदितम् । उपस्थानभोग्य आवासो भुक्तिश्च । कपिञ्जल आह । सन्त्यत्र प्राश्निकाः । पृच्छामो देशभूपमिति । उक्तं च धर्मशास्त्रे ।

वापीकूपतडाकानां गृहस्यावसथस्य च ।
सामन्तप्रत्यया सिद्धिरित्येवं मनुरब्रवीत् ॥ ५८ ॥

तथा नामेति प्रतिपद्य प्रस्थितौ व्यवहारकरणाय । अहमपि कौतुकात्तयोरेव पृष्ठतो ऽनुगतः । पश्यामि किमत्र तथ्यमिति । नातिदूरं गत्वा कपिञ्जलः शशमाह । क आवयोर्व्यवहारं द्रक्ष्यति । असावब्रवीत् । नन्वयं नदीपुलिनगतस्तपःसंश्रित उदधिकर्णो

नाम सकलशास्त्रपारगश्चिरजीवी धर्मशास्त्रविन्मार्जार इति । अयमेवास्य संशयस्य छेत्ता । तच्च श्रुत्वा कपिञ्जलो ऽब्रवीत् । अलमनेन क्षुद्रेण । उक्तं च ।

न हि विश्वसनीयः स्यात्तपस्विच्छद्मना स्थितः ।
दृश्यन्ते बहवस्तीर्थे गलद्दन्तास्तपस्विनः ॥ ५९ ॥

तच्च श्रुत्वा सुखोपायप्रवृत्तिप्रसाधनच्छद्मलिप्सुर्दधिकर्णो मार्जारस्तद्विश्वासनार्थं सुतरामादित्याभिमुखो द्विपादः स्थितः । ऊर्ध्वबाहुर्निमीलितैकनयनो जपन्नासीत् । जपतश्च तस्य विश्वस्तहृदयावुपश्लिष्टस्थाने व्यवहारश्रावणमकुरुताम् । तेन चाभिहितम् । वृद्धत्वाद्धतेन्द्रियत्वाच्च नातिस्पष्टतरं *शृणोम्यहम् । संनिकृष्टौ भूत्वोच्चैः श्रावयतम् । सुष्ठुतरं* चादृतौ भूत्वा धर्मशास्त्रसंबन्धमवोचत् ।

धर्म एव हतो हन्ति धर्मो रक्षति रक्षितः ।
तस्माद्धर्मो न हन्तव्यः कदाचिदपि साधुभिः ॥ ६० ॥
एक एव सुहृद्धर्मो निधने ऽप्यनुयाति यः ।
शरीरेण समं नाशं सर्वमन्यद्धि गच्छति ॥ ६१ ॥
अन्धे तमसि मज्जामः पशुभिर्ये यजामहे ।
अहिंसानामको धर्मो न भूतो न भविष्यति ॥ ६२ ॥
मातृवत्परदारांस्तु परद्रव्याणि लोष्टवत् ।
आत्मवत्सर्वभूतानि यः पश्यति स पश्यति ॥ ६३ ॥

तत्किं बहुना । तथा तौ छद्मना विश्वासं नीतौ । येनाङ्कमुपगतौ हतौ चेति । यतो ऽसावन्तर्लीनमवहस्याब्रवीत् ।

यो हि प्राणपरिक्षीणः सहायरहितस्तथा ।
स एव हि सुखोपायां वृत्तिमासादयेद्बुधः ॥ ६४ ॥

अतो ऽहं ब्रवीमि । क्षुद्रमर्थपतिं प्राप्येति । तत्सर्वथा नाश्रयणीयगुणोपेतो ऽयम् । तत्किमनेनेति । तस्य तु तद्वचनमङ्गीकृत्य साध्वनेनाभिहितमिति मत्वाब्रुवन् । पुनरेव समवायं कृत्वा महद्राजकार्यं संप्रधारयिष्यामः । इत्युक्त्वा यथागतं सर्वपक्षिणो विचेरुः । केवलस्त्ववशिष्टो भद्रपीठगतो ऽभिषेकाभिमुखो दिवान्धः । केन चेदमनर्थायाभिहितं मम । वायसेनेत्युपलब्धवार्त्त उलूको वायसवचनेनादीपितमनास्तमाह । किं मयापकृतं भवतः । येनाभिषेकव्याघातः कृत इति ।

संरोहतीषुणा विद्धं वनं परशुना हतम् ।
वाचा दुरुक्तं बीभत्सं न संरोहति वाक्कृतम् ॥ ६५ ॥

तत्किं बहुना । अद्यदिवसादारभ्यास्माकं भवतां च वैरम् । इति चाभिधाय समुज्झिताभिषेको दिवान्धो यथागतं प्रायात् । असावपि वायसश्चिन्तयामास । किमिदमनर्थं सामान्ये ऽर्थे कृतमिति ।

अदेशकालार्थमनायतिक्षमं
यदप्रियं लाघवकारि चात्मनः ।
विचिन्त्य बुद्ध्या मुहुरप्यवैम्यहं
न तद्वचो हालहलं हि तद्विषम् ॥ ६६ ॥
बलोपपन्नो ऽपि हि बुद्धिमान्नरः
परं नयेत्कः स्वयमेव वैरिताम् ।
भिषङ्ममास्तीति विचिन्त्य भक्षयेद्-
कारणं को हि विचक्षणो विषम् ॥ ६७ ॥

तदिदमापतितं ममाज्ञानादिति । यच्च हितैषिभिः सार्धमसंप्रधार्य क्रियते । तस्येदृश एव विपाको भवति । उक्तं च ।

सुहृद्भिराप्तैरसकृत्परीक्षितं
स्वयं च भूयः परिचिन्तिताश्रयम् ।
करोति कार्यं खलु यः स बुद्धिमा-
न्स एव लक्ष्म्या यशसश्च भाजनम् ॥ ६८ ॥

इति । एवमुक्त्वा काको ऽपि प्रायात् ।

A 215 तदेवम् । देव । वाक्कृतादस्माकमुलूकैः सह वैरमिति । मेघवर्ण आह । अवगतं मयेदम् । तात । संप्रधार्यताम् । येनेह नागच्छन्ति । तावदुपायश्चिन्त्यताम् । असावाह । स्वामिन् । संधिविग्रहासनयानसंश्रयद्वैधीभावानां षण्णां गुणानां संधिविग्रहावादावाख्यातौ । अधुना त्वासनयानसंश्रयसमवायानामस्माकमभाव एव । यत्कारणम् । आसनं दुर्गविनाशाय । यानं दुर्गपरित्यागाय । कं बलवन्तं संश्रयामः । कस्य समवायः ।

A 216 तदेवं गते सामदानभेददण्डानां चतुर्णां नयानां नास्त्यवकाशः । अस्ति पञ्चमो ऽप्यशास्त्रकर्तुर्नयश्छलो नाम । तमङ्गीकृत्य स्वयमेवाहं तद्विजयाय परिभवाय च प्रयतिष्ये । उक्तं च ।

बहवो ऽबलवन्तश्च कृतवैराश्च शत्रवः ।
शक्ता वञ्चयितुं प्राज्ञं ब्राह्मणं छगलादिव ॥ ६९ ॥

A 217 सो ऽब्रवीत् । कथं चैतत् । चिरजीव्याह ।

## ॥ कथा ५ ॥

अस्ति । कश्चिद्ब्राह्मणः पशुबन्धननिमित्तं पशुमादाय स्ववेश्मन्युच्चलितः । अर्धपथे च धूर्तैर्दृष्ट्वाभिहितम् । भक्षयामो ऽद्यैनमजमिति । ततस्तस्यैवाग्रतः कृतसंकल्पैर्मार्गाभिमुख्येनागच्छद्भिरेकद्वित्रिप्रविभागेन यातम् । यस्तु तेषामग्रगः । तेन ब्राह्मणो ऽभिहितः । अवश्यमसौ । साधो । श्वा सगुणः । येन त्वया स्कन्धेनोह्यते । अथवा श्वापदव्यापादने कुशल इति । एवमुक्त्वापक्रान्तः । ब्राह्मणश्चिन्तयामास । किमनेन दुरात्मनाभिहितम् । कथमहं श्वानं

स्कन्धे करिष्यामि । यावदन्यौ द्वौ धूर्तौ संप्राप्तौ । ताभ्यामपि ब्राह्मणो ऽभिहितः । ब्रह्मन् ' किमिदमसदृशं व्यवसितम् । यज्ञोपवीतमक्षमाला कमण्डलुस्त्रिपुण्ड्रकं स्कन्धे च श्वा विधृतम् । अथवा शशमृगसूकरव्यापादने नूनमयं कुशल इति । एवमुक्त्वा तावतिक्रान्तौ । ब्राह्मणस्तु जिज्ञासया पशुं भूमौ निक्षिप्य सुनिपुणं कर्णशृङ्गवृषणपुच्छादीनवयवान्परामृश्याचिन्तयत् । मूर्खास्ते । कथमिमं श्वानमिवावधारयन्ति । पुनः स्कन्धेनादाय प्रायात् । अथान्यैस्त्रिभिरभिहितो ब्राह्मणः । न त्वया स्प्रष्टव्या वयमिति । एकपार्श्वेन गम्यताम् । यत्कारणम् ' शुचिरसि लिङ्गमात्रेण । ब्राह्मण ' श्वसंपर्कान्नूनं व्याधो भविष्यसि । इत्युक्त्वापक्रान्ताः । अथासौ ब्राह्मणश्चिन्तयामास । किमिदमापतितम् । अथवा यतो बहुत्वम् ' तत्प्रमाणम् । दृश्यन्ते च लोके विपरीतानि । कदाचिदयं श्वरूपी राक्षसः स्यात् । किम् । अस्य शक्यं स्वरूपं कर्तुमिति । एवं संप्रधार्य भूमौ निक्षिप्यानवलोकयंन्नेव प्रायात्प्रायश्चित्तभयात् । तैरपि भक्षितो ऽसौ पशुरिति ।

A 218 अतो ऽहं ब्रवीमि । बहवो ऽबलवन्तश्चेति । तत् ' देव ' अस्ति किंचिद्वक्तव्यम् ।
तच्चावधार्य यथोक्तमनुष्ठेयम् । सो ऽब्रवीत् । तात ' अथ किम् । चिरजीव्याह ।
देव । मां विगतपक्षं कृत्वाहार्यैरसृग्भिरभ्युक्ष्यास्मान्न्यग्रोधपादपात्प्रक्षिप्यापयानं कृत्वर्ष्य-
मूकपर्वते सपरिवारस्तिष्ठ ' यावदहं तान्सपत्नाञ्छास्त्रप्रणीतेन विधिना दक्षिणाशा-
मुखान्कृत्वा कृतार्थः पुनस्त्वत्सकाशमागच्छामि । न च त्वया मदीयचिन्ता कार्या ।
A 219 तथा चानुष्ठिते ऽस्तं गते सवितर्यसावपमर्दः स्वसैन्यपरिवारस्तमेव न्यग्रोधमव-
रूढः ' न च तत्र कंचिदपि वायसं पश्यति । शिखरगतश्चाचिन्तयत् । क्व ते शत्रवो
गता इति । अथ चिरजीवी क्षितितलगत एवं चिन्तयामास । यद्येते शत्रवो ऽनुप-
लब्धवृत्तान्ता एवापयान्ति ' ततो मया किं कृतं भवति । उक्तं च ।

अनारम्भस्तु कार्याणां प्रथमं बुद्धिलक्षणम् ।
आरब्धस्यान्तगमनं द्वितीयं बुद्धिलक्षणम् ॥ ७० ॥

A 220a तद्वरमनारम्भः ' न त्वारब्धविनाशः । यतो ऽहमेषां स्वशब्दश्रावणादात्मानं दर्शयामीति । एवमनुचिन्त्य मन्दमन्दं वाशितवान् । तत्संनिकृष्टस्थाः श्रुत्वोलूका वायसस्यायं शब्द इत्यवधार्य स्वामिने न्यवेदयन् । तच्च श्रुत्वा कौतुकपरो ऽपमर्दो ऽवतीर्य व्यक्तं साधयित्वा सचिवानब्रवीत् । पृच्छ्यताम् ' कस्त्वमिति । पृष्टश्चासावकथयत् । अहं चिरजीवीति । तच्छ्रुत्वापमर्दः परं विस्मयमगमत् ' आह च । अयं तस्य राज्ञो ऽभिमतो मुख्यो मन्त्रधरः । किमयं तैर्निरस्तो ऽभिशस्तश्च । स एवं पृष्टस्तमाह । स्वामिन् ' श्रूयताम् । अस्ति ' किंचित्समुत्सादनं कृत्वा युष्मास्वपयातेषु मेघवर्णो हतशेषान्सैनिकान्दृष्ट्वा परं विषादमगमत् । मन्त्रिभिः सह संप्रधारितवान् । किं बहुना ' त्वद्विनाशाय प्रारब्धमिति । ततो मयाभिहितम् । ते बलवन्तः ' वयं हीनाः । तत्सर्वथा प्रणतिरेव तेभ्यो ऽस्माकं शिवायेति । उक्तं च ।

बलीयसा हीनबलो विरोधं
न भूतिकामो मनसापि कुर्यात् ।
न वध्यते वेतसवृत्तिरर्थै-
रेकान्तनाशो ऽस्ति पतंगवृत्तेः ॥ ७१ ॥

अपि च ।

गुणवानेव नमते पुरुषः कार्मुको यथा ।
निर्गुणः स्तब्धतामेति पुरुषः कार्मुको यथा ॥ ७२ ॥

A 220b ततो ऽहं त्वत्पक्ष इति मत्वा निरपेक्षैरिमामवस्थां प्रापितः ।

A 221 तच्च श्रुत्वापमर्दः पितृपैतामहैर्मन्त्रिभिः सहावधारितवान् ' रक्ताक्षक्रूराक्षदीप्ताक्षवक्रनासप्राकारकर्णैः । अत्रादौ रक्ताक्षं पृष्टवान् । भद्र ' किमेवं गते न्याय्यमिति । सो ऽब्रवीत् । किमत्र चिन्त्यते । अविचार्य हन्तव्यो ऽयम् । यत्कारणम् '

हीनः शत्रुर्निहन्तव्यो यावन्न बलवान्भवेत् ।
संजातबलपौरुष्यः पश्चाद्भवति दुर्जयः ॥ ७३ ॥

A 222 अपि च ' स्वयमुपगता श्रीस्त्यज्यमानाभिशपतीति लोकप्रवादः ।

कालो हि सकृदभ्येति यन्नरं कालकाङ्क्षिणम् ।
दुर्लभः स पुनस्तेन कालः कर्म चिकीर्षता ॥ ७४ ॥

A 223 तदस्मिन्हते राज्यमकण्टकं भविष्यतीति । उक्तं च ।

अमित्रं न विमुञ्चेत ब्रुवाणं करुणान्यपि ।
दुःखं तत्र न कर्तव्यं हन्यात्पूर्वापकारिणम् ॥ ७५ ॥

A 224 ततो ऽनुक्रमेण क्रूराक्षमाह । भद्र ' एवं गते ऽस्य किं कर्तव्यमिति । सो ऽब्रवीत् । देव ' अवध्यो ऽयम् । यत्कारणम् '

वदत्सु दीनं शरणागतेषु
कृतोपकारेषु भये सुखे च ।
घृणा हि येषां न रुणद्धि रौद्रतां
शिलोच्चयास्ते प्रतिकूलराशयः ॥ ७६ ॥
सर्वोत्पत्तिसमृद्धस्य नाश्वमेधस्य तत्फलम् ।
यत्फलं भय उत्पन्ने रक्षिते शरणागते ॥ ७७ ॥

A 225a तदपि श्रुत्वा दीप्ताक्षं पृष्टवान् । भद्र । कथं मन्यसे । सो ऽब्रवीत् । देव । निश्चितमेव शरणागतः शत्रुरवध्य इति ।

श्रूयते हि कपोतेन शत्रुः शरणमागतः ।
पूजितश्च यथान्यायं स्वैश्च मांसैश्च तर्पितः ॥ ७८ ॥

A 225b अपि च । अयं तैर्विप्रकृतः । देव । अस्माकं पुष्टये तदवसादाय च भविष्यति । तदयमवध्य इति ।

A 226 तदवधार्यापमर्दो वक्रनासं पृष्टवान् । अत्र भवान्कथं मन्यते । सो ऽब्रवीत् । देव । अवध्यो ऽयमिति । यत्कारणम् ।

शत्रवो ऽपि हितायैव विवदन्तः परस्परम् ।
चौरेण जीवितं दत्तं राक्षसेन तु गोयुगम् ॥ ७९ ॥

A 227 स आह । कथं चैतत् । असावकथयत् ।

## ॥ कथा ६ ॥

अस्ति कस्यचिद्दरिद्रब्राह्मणस्य प्रतिग्रहलब्धमा बालभावाद्घृततैललवणयवसयोग्याशनसंवर्धितं गोयुगलम् । तच्च दृष्ट्वा चौरः कश्चिदेवं समर्थितवान् । अद्यैव तद्धरिष्यामीति । प्रथमप्रदोषसमये गन्तुमारब्धः । गच्छंश्च केनाप्यविज्ञातेन स्कन्धप्रदेशसंश्लिष्टः । अथ तेन पृष्टः । को भवानिति । स च सत्यवचनमाह । नक्तंचरो ऽहं ब्रह्मराक्षसः । भवान्कथयतु । कस्त्वमिति । सो ऽब्रवीत् । अहं चौरः । कस्यचिद्ब्राह्मणस्य गोयुगलं हर्तुमिच्छामि । अथ विज्ञातप्रत्ययो ऽसावाह । अहमपि तं ब्राह्मणं ग्रहीतुमिच्छामि । ततस्तौ

द्वावपि गत्वैकान्ते ऽवस्थितौ फलमवेक्षमाणौ । प्रसुप्ते च ब्राह्मणे ब्रह्मराक्षसस्तद्ग्रहणाय संश्लिष्टश्चौरेणाभिहितः । नैष न्यायः । गोयुगे मयापहृते पश्चाद्गृहीष्यसीति । सो ऽब्रवीत् । अयमप्यनयः । कदाचिदयं शब्देन प्रतिबुध्येत । ततो मे व्यर्थः स्यादागम इति । एवं तयोः परस्परं वैरमुत्पन्नम् , अहंपूर्विकया च युगपत्प्रतिबोधितवन्तौ ब्राह्मणम् । चौरस्तावदवोचत् । ब्राह्मण , ब्रह्मराक्षसस्त्वां ग्रहीतुमिच्छति । ब्रह्मराक्षसो ऽप्याह । चौरस्ते गोयुगलमपहर्तुमिच्छति । ततस्तावुभावपि चौरराक्षसावपयाताविति ।

A 228 अतो ऽहं ब्रवीमि । शत्रवो ऽपि हितायैवेति । अन्यच्च ।

शिविनापि स्वमांसानि कपोतार्थे महात्मना ।
श्येनाय किल दत्तानि श्रूयते पुण्यकर्मणा ॥ ८० ॥

A 229 अपमर्द आह । कथं चैतत् । सो ऽब्रवीत् ।

## ॥ कथा ७ ॥

अस्ति राजा शिविर्नाम सकलभूपालमौलिमालार्चितचरणः परमकारुणिकः सकलार्थिजनसंपादितमनोरथः । तस्यानन्यसदृशया दानशीलतया यशस्त्रिदिवमारुरोह । अथ कदाचिदाखण्डलश्चिन्तयामास । नास्ति दानशीलः शिविना तुल्यः । तत्को ऽस्याभिप्रायः , कियद्वा सत्त्वमस्य । इति जिज्ञासार्थं धर्ममाहूय स्वयं कपोतो ऽभवत् । धर्मश्च श्येनः कपोतस्य पृष्ठतस्त्वरितगतिरभिभवितुं प्रवृत्तः । अथ तस्य राज्ञः सुखासनस्थस्य प्रभातसमय एवास्थानगतस्यासौ कपोतः कम्पमानो भयतरलनेत्रतारकः करुणरसितमाविष्कुर्वञ्शरणसमीपे सहसैव संनिपतितः प्रोवाच भयगद्गदया गिरा। राजन् , शरणागतो ऽस्मि ते। परित्रायस्व मां श्येनात्।

अथ श्येनो ऽपि राज्ञः पुरतः पपात । सो ऽपि राजन् ' मुञ्च मुञ्च ' क्षुधातुरस्य मे भक्ष्यं समर्पयस्वेति प्रोच्चैरुवाच । कपोत आह । देव ' शरणागतस्य मे परित्राणमर्हसि । स्वशरीराण्यपि शरणागतार्थं त्यजन्तीति साधवो नित्यम् ' न शरणागतम् । श्येनो ऽब्रवीत् । राजन् । सकलमनोरथदाता किल श्रूयसे । अतो मे भक्ष्यमेनं दातुमर्हसि । प्राणसंशयमापन्नो ऽस्मीति । असावपि राजा जातकारुण्यः कथमेतदिति संभ्रान्तो दोलारूढ इव सान्त्वयञ्छ्येनमाह । नैष सतां पन्थाः ' शरणागतपरित्यागः । तदहं मांसमन्यदेव ते दापयामि ' यावत्तृप्तिमवाप्नोषीति । श्येनः । न वयं परहतपिशितभुजः । स्वयं जीवतो मांसान्युष्णरुधिरकललान्यास्वादयामहे । किंतु यावन्मात्रमिदं कपोतमांसं तुलितं भवति ' तावन्मे स्वमांसं प्रयच्छस्वेति । बाढम् ' दातास्मीति राज्ञि प्रतिपन्ने हाहाकारः समभूद्भूभुजाम् । देव ' मा साहसं कार्षीः ' एष श्येनरूपी राक्षसस्त्वद्विनाशहेतुरागत इति । एवमार्तनादे वर्तमाने तुलां कपोतः समारोपितः । कक्षां तत्समां कृत्वा स्वमांसमङ्गावयवादुत्कृत्यारोपितम् ' न च कपोतसमं भवत्येव । अवशेषावयवविलुप्तपिशितः शिविर्यदा कपोतस्य न तुल्यतां संजगाम ' तदा नमः सर्वविदे धर्मायेति कृत्वा स्वयमेव तुलामधिरूढः । अथ दिवि देवदुन्दुभयः प्रणेदुः । अविरलकुसुमवृष्टिसारः समीरणः प्रववौ । साधु साध्विति दशस्वपि दिक्षु वाचो विचेरुः । अत्रान्तरे धर्मपाकशासनौ प्रकटितरूपौ तं राजानमाहतुः । साधु ' महीनाथ । शोभनस्ते ऽतिनिपुणः प्राणिधर्मो विज्ञातः । परमार्थतस्त्वमेव जिज्ञासितः । तदिदं शरीरं ते पुरातनमिवास्तु ' कोशमक्षयं धर्मे च सदा मतिर्भूतभूतये भवतु ' इत्युक्त्वान्तर्धानमागतौ ।

A 230 अतो ऽहं ब्रवीमि । शिविनापि स्वमांसानीति । तच्चायं शरणागतो न हन्तव्यः ।

A 231 ततो ऽनन्तरं प्राकारकर्णः पृष्टः । स एवमेव समर्थितवान् ।

A 232 अथान्तर्लीनमवहस्य रक्ताक्षः पुनरब्रवीत् । कष्टम् । विनाशितो ऽयं स्वामी युष्माभिरनयेन । उक्तं च ।

प्रत्यक्षे ऽपि कृते दोषे मूर्खः सान्त्वेन तुष्यति ।
रथकारः स्वकां भार्यां सजारां शिरसावहत् ॥ ८१ ॥

A 233 ते प्राहुः । कथं चैतत् । सो ऽब्रवीत् ।

## ॥ कथा ८ ॥

अस्ति कस्मिंश्चिदधिष्ठाने रथकारः । तस्य भार्या व्युत्पन्नचारित्राजस्रं मित्रस्वजनैः प्रतिबोध्यते । न च तस्मात्परपुरुषसंसर्गान्निवर्तते । यतो ऽसौ जिज्ञासुस्तामाह । भद्रे । विप्रकृष्टे देशान्तरे राजकीयो मण्डपः कर्तव्यः । तत्र मया श्वो गन्तव्यमिति । तया च तुष्टया यथाज्ञप्तमेव शम्बलं कृतम् । तथा चानुष्ठिते गृहीतोपस्करपथ्योदनः प्रहरशेषायां शर्वर्यां तामाह । गतो ऽहम् । भद्रे । द्वारं संवृणीष्वेति । तत्वा चाविज्ञात एव प्रतिनिवृत्त्य स्वशय्याधस्तादात्मद्वितीयः सह शिष्येणावस्थितः । असावपि हृष्टहृदयाद्य मम निरङ्कुशो दयितजनसमागम इति दूतिकया विटमानाय्य तत्रैव निर्विशङ्कपानभोजनाद्यनुष्ठितवती । कथमपि चाप्राप्तरतयैव पादौ चालयन्त्या जानुप्रदेशे रथकारः स्पृष्टः । ततो ऽसावचिन्तयत् । असंशयं स एव रथकारो भविष्यति । तत्कथं करणीयमिति । अस्मिंश्चान्तरे सशपथं विटेनाभिहिता । कथय । मम वा भर्तुर्वा तव कः प्रिय इति । यतस्तया प्रतिपत्तिकुशलयाभिहितः । प्रष्टव्यं पृच्छसि । स्त्रियो हि नामैता लघुधर्मिण्यो यत्किंचनप्रवृत्ताश्च । किं बहुना । यद्यासां नासिका न स्युः । असंशयममेध्य-

मपि भक्षयेयुरिति संक्षेपः। यद्यहमीषन्मात्रमप्यकुशलं भर्तुः शृणुयाम्। सद्यः प्राणपरित्यागं कुर्यामिति। अथ रथकारस्तया धर्षण्या कृतकवचनव्यंसितमनाः शिष्यमवोचत्। विजयतां ममात्यन्तभक्ता दयिता। सर्वजनसकाशं संमानयामि। इत्युक्त्वा स्कन्धेनादाय खट्वासीनां सजारां राजमार्गरथ्यान्तरेषु भ्रामयञ्जनहासमवाप्तवान्।

A 234 अतो ऽहं ब्रवीमि। प्रत्यक्षे ऽपि कृते दोष इति। तत्सर्वथा विनष्टाः स्मः। साधु चेदमुच्यते।

मन्त्रिरूपा हि रिपवः संभाव्यास्ते विचक्षणैः।
ये हिते नयमुत्सृज्य विपरीतोपसेविनः॥ ८२॥
सन्तो ऽपि हि विनश्यन्ति देशकालनिराकृताः।
अप्राज्ञं मन्त्रिणं प्राप्य तमः सूर्योदये यथा॥ ८३॥

A 235a तदपि तस्य वचनमपाकृत्य चिरजीविनमुद्धृत्य स्वदुर्गं नेतुमारब्धः।

A 235b अथ चिरजीव्याह। देव। किं मयैतदवस्थेनाकिंचित्करेण संगृहीतेन। किं ममैतदवस्थस्य जीवितेन। इच्छाम्यहं प्रदीप्तमग्निं प्रवेष्टुम्। तदर्हसि मामग्निदानेनोपकर्तुमिति। रक्ताक्षेण तु तस्यान्तर्निहितभावसूचितमाकारं ज्ञात्वाभिहितम्। किमग्निसंपातमिच्छति भवान्। सो ऽब्रवीत्। अहं तावद्युष्मदर्थमिमामापदं प्राप्तः। तदिच्छामि तेषां वैरनिर्यातनार्थमुलूकयोनिमग्नौ कृतशरीरप्रभावादिति। रक्ताक्षो ऽब्रवीत्।

अन्तर्भावनिगूढेयं वाक्ते प्रकृतिपेशला।
विकाराद्यनभिज्ञाय विषदिग्धेव वारुणी॥ ८४॥

A 236 दुष्ट। अशक्या तवोलूकयोनिरसंभाव्या च। यत्कारणम्।

सूर्यं भर्तारमिच्छन्ती पर्जन्यं मारुतं गिरिम्।
स्वयोनिं मूषिका प्राप्ता योनिर्हि दुरतिक्रमा॥ ८५॥

A 237 सो ऽब्रवीत्। कथं चैतत्। असावाह।

## ॥ कथा ९ ॥

अस्ति। कस्मिंश्चिद्देशे ऋषिर्जाह्नव्यां स्नात्वोपस्प्रष्टुमारब्धः। करतले चास्य श्येनपरिभ्रष्टा मूषकशाविका पतिता। तां चासौ न्यग्रो-

घपादपमूले संस्थाप्य पुनः स्नात्वा गृहाभिमुखः प्रायात् । मूषिकां च स्मृत्वाचिन्तयत् । नृशंसमेतन्मया कृतं मातृपितृपरिभ्रष्टां मूषिकां परित्यजतेति । एवमाकलय्य प्रतिनिवृत्य तां मूषिकां स्वतपोबलेन कन्यां कृत्वा गृहमानीयानपत्यायै भार्यायै प्रायच्छत् ' आह च । भद्रे ' प्रयत्नेनेयं संवर्ध्यतामिति ।

अथ कालेन द्वादशवर्षे प्राप्ते विवाहकार्ये तस्या ऋषिश्चिन्तामापेदे ' यतः ।

पितुर्गृहे तु या कन्या रजः पश्यति चक्षुषा ।
वृषली सा तु विज्ञेया न शूद्री वृषली स्मृता ॥ ८६ ॥

अतो ऽहमेनां सदृशाय प्रयच्छामि । उक्तं च ।

ययोरेव समं वित्तं ययोरेव समं कुलम् ।
तयोः सख्यं विवाहश्च न तु पुष्टविपुष्टयोः ॥ ८७ ॥

स एवं मत्वा भगवन्तं सहस्रकिरणमाहूयाभिहितवान् । विवाह्यतां मम दुहितेयमिति । असावपि लोकपालः सर्ववृत्तान्तप्रत्यक्षदर्शी तमाह । भगवन् । मत्तो मेघा बलवत्तराः । यत्कारणम् ' अहमुदितो ऽपि तैरदृश्यः क्रिय इति । एवमेतदित्युक्त्वा मुनिर्मेघानाहूतवान् । गृह्यतां मे दुहितेति । ते ऽप्याहुः । अस्मत्तो ऽपि बलवान्वायुः । तेन वयमितश्चेतश्च दिग्भ्यो विक्षिप्यामहे । अथ तेन वायुराहूतः ' गृह्यतां मद्दुहितेति । एवमुक्तो ऽसावब्रवीत् । भगवन् । मत्तो बलवत्तराः पर्वताः ' यतो ऽहं तानङ्गुलमात्रमपि चालयितुमशक्तः । ततो ऽसावचलमाहूयाभिहितवान् । गृह्यतां मम कन्येति । स आह । नूनमचला वयम् ' किंत्वजस्रं मूषकैर्गम्याः । तैरितश्चेतश्च शतच्छिद्राः क्रियामहे । एवमवधार्य मुनिना मूषक आहूयोक्तः । गृह्यतां मम कन्येति । ततो ऽसावाह ।

विधुरमिदम् । कथमियं विवरं प्रवेक्ष्यतीति । सत्यमेतदिति परमर्षिणा स्वतपोबलेन पुनः पूर्वप्रकृतिमापादिता ।

A 238 अतो ऽहं ब्रवीमि । सूर्यं भर्तारमासाद्येति । इत्येवमवसिते च तस्मिन्वाक्ये तिरस्कृत्य रक्ताक्षमुद्धृत्य चिरजीविनं स्वविनाशायात्मीयं दुर्गमनयत् । * * * * * * * * * * * * * * * * * *

वध्यतामिति येनोक्तं स्वामिनो हितवादिना ।
स एवैको ऽत्र मन्त्रिभ्यो नीतिशास्त्रार्थतत्त्ववित् ॥ ८८ ॥

A 239 यद्यप्येते शृणुयुः ' तदाशा मे सफला न स्यादिति ।

A 240 प्राप्य च दुर्गद्वारमपमर्दस्तान्सचिवानब्रवीत् । यथेप्सिते स्थाने ऽवस्थाप्यतां चिरजीवीति । चिरजीविनापि प्राप्तकालं सुखमपसरिष्यामीति दुर्गद्वारे ऽवस्थानं कल्पितम् । प्रतिदिनं च दिग्विजयमात्मेच्छया कृत्वोलूका राजादेशात्सुप्रभूतं मांसमादाय चिरजीविने प्रायच्छन् ।

A 241 असावपि रक्ताक्षः स्वकुटुम्बमाहूयोक्तवान् । अचिरादस्माद्वायसादहं विनाशं पश्यामि । तन्न युक्तमेभिः सह मूढैरेकत्र वस्तुम् । यतः ।

हीयते हि मतिस्तावद्धीनैः सह समागमात् ।
समैश्च समतामेति विशिष्टैश्च विशिष्टताम् ॥ ८९ ॥

A 242 यतो ऽन्यामद्रिगुहामाश्रित्य सुखं वत्स्यामः ' इमां च गुहामासन्नविनाशोपसृष्टां त्यजाम इति । एवमुक्त्वा रक्ताक्षः सपरिजनो ऽन्यत्र प्रायात् ।

A 243 ततो ऽसावपि चिरजीवी वायसो ऽल्पीयसा कालेन संजातबलपक्षो मयूर इव गौराङ्गः संवृत्तः । एवं चाचिन्तयत् ।

दृष्टः सारो बलं चैषां दुर्गं चापि यथार्थतः ।
अहीनकालमधुना कर्तव्यः संक्षयो द्विषाम् ॥ ९० ॥
संजातबलपौरुष्य उत्पातकुशलस्तथा ।
शक्तो ऽहं सर्वकार्येषु प्रहर्तुमपकारिणः ॥ ९१ ॥

A 244 एवमवधार्य तत्क्षयार्थं गुहायां कक्षं प्रक्षिप्य मेघवर्णान्तिकमगमत् । तं चायान्तं दृष्ट्वा दर्शनोत्सुकाः सर्व एव वायसाः ' तात ' भ्रातः ' मातुल ' इत्येवमभिवदन्तः सहर्षास्तदभिमुखाः प्रस्थिताः ' चिरजीविना समागताः ' तेन चाभिहिताः । नायमस्यात्याक्षेपस्य कालः । गृह्यतामेकैकं सुखसंवाह्यं दारु । अहमप्यग्निं ग्रहीष्यामि । तथा चानुष्ठिते दृष्टमार्गेरन्ध्रान्तरो ऽसौ चिरजीवी यत्कृतवान् ' तद्भवतामनाख्यातं विदितमेव ।

A 245 दग्ध्वा च नागलोकान्तां गुहामवाप्तसकलमनोरथश्चिरजीवी पुनरन्यं दुर्गसंस्कारं कारयित्वा मङ्गलकल्याणाभ्युदयलक्षणेन घोषेण तस्मिन्नेव न्यग्रोधपादपे सर्वप्रकृतिसमेतं राजानं मेघवर्णमास्थापितवान् ।

A 246 अथ निर्जितारिर्मेघवर्णश्चिरजीविनमाह । तात । कथं त्वया शत्रुमध्यगतेन कालो ऽतिवाहितः ।

वरमग्नौ प्रदीप्ते तु प्रपातः पुण्यकर्मणाम् ।
न चारिजनसंसर्गो मुहूर्तमपि सेवितः ॥ ९२ ॥

A 247 सो ऽब्रवीत् । भद्र ।

उपनतभये यो यो मार्गो हितार्थकरो भवे-
त्स स निपुणया बुद्ध्या धेयो महान्कृपणो ऽपि वा ।
करिकरनिभौ ज्याघाताङ्कौ महास्त्रविशारदौ
वलयरणितौ स्त्रीवद्बाहू कृतौ न किरीटिना ॥ ९३ ॥
शक्तेनापि सदा जनेन विदुषा कालान्तरापेक्षिणा
वस्तव्यं खलु वक्रवाक्यनिपुणे क्षुद्रे ऽपि पापे जने ।
दर्वीव्यग्रकरेण धूममलिनेनायासखिन्नेन किं
भीमेनातिबलेन मत्स्यभवने सूदा न संघट्टिताः ॥ ९४ ॥
यद्वा तद्वा विषमपतितः साधु वा गर्हितं वा
कालाकाङ्क्षी पिहितनयनो बुद्धिमान्कर्म कुर्यात् ।
किं गाण्डीवस्फुरदुरुगुणास्फालनव्यग्रपाणि-
र्नासील्लीलावलयितरणन्मेखलः सव्यसाची ॥ ९५ ॥
सिद्धिं प्रार्थयता जनेन विदुषा तेजो निगृह्य स्वकं
सर्वोत्साहवतापि दैवविधिषु स्थेयं समीक्ष्य क्रमम् ।
देवेन्द्रद्रविणेश्वरान्तकसमैरप्यन्वितो भ्रातृभिः
किं क्लिष्टः सुचिरं त्रिदण्डमवहच्छ्रीमान्न धर्मात्मजः ॥ ९६ ॥
रूपाभिजनसंपन्नौ माद्रीपुत्रौ गुणान्वितौ ।
गोवाजिस्वस्तिसंस्कारे विराटप्रेष्यतां गतौ ॥ ९७ ॥
रूपेणाप्रतिमेन यौवनगुणैर्वंशे शुभे जन्मना
युक्ता श्रीरिव या तयापि च वशं कालक्रमादागतम् ।
सैरन्ध्रीति सगर्वितं युवतिभिः साक्षेपमाज्ञप्तया
द्रौपद्यापि न मत्स्यराजभवने घृष्टं चिरं चन्दनम् ॥ ९८ ॥

A 248 मेघवर्ण आह । असिधाराव्रतमिव । मन्ये । अप्रियेण सह संवासः । सो ऽब्रवीत् । देव । एवमेतत् । तथापि ।

सहते सुहृदिव भूत्वा प्राज्ञः शक्तिचये निराकारः ।
कालं प्रतीक्षमाणः प्रीतिप्रच्छादिताशक्तिः ॥ ९९ ॥

A 249 तत्किं बहुना ' न तादृङ्मया मूर्खसमागमो दृष्टपूर्वो वर्जयित्वैकं रक्ताक्षम् । तेन तु मम यथावस्थितं हृद्गतं ज्ञातम् । अन्ये ते पुनर्नाममात्रमन्त्रिणः । किं तैः ' एतद्यैर्न विज्ञातम् ।

अरितो ऽभ्यागतो मित्रः शत्रुसंवासतत्परः ।
सर्पसंवासधर्मित्वान्नित्योद्वेगेन दूषितः ॥ १०० ॥
प्लक्षन्यग्रोधबीजानां कपोतादिव शाल्मलेः ।
मूलोत्खातकरो दोषः पश्चादपि भयंकरः ॥ १०१ ॥
आसने शयने याने पानभोजनवस्तुषु ।
दृष्ट्वान्तरं प्रमत्तेषु प्रहरन्त्यरयो ऽरिषु ॥ १०२ ॥
तस्मात्सर्वप्रयत्नेन त्रिवर्गनिलयं बुधः ।
आत्मानमादृतो रक्षेत्प्रमादाद्धि विनश्यति ॥ १०३ ॥

साधु चेदमुच्यते ।

संतापयन्ति कमपथ्यभुजं न रोगा
दुर्मन्त्रिणं कमुपयाति न नीतिदोषः ।
कं श्रीर्न दर्पयति किं न निहन्ति मृत्युः
कं स्त्रीकृते न विषयाः परितापयन्ति ॥ १०४ ॥
लुब्धस्य नश्यति यशो विषमस्य मित्रं
नष्टक्रियस्य कुलमर्थपरस्य भृत्याः ।
विद्याफलं व्यसनिनः कृपणस्य सौख्यं
राज्यं प्रमत्तसचिवस्य नराधिपस्य ॥ १०५ ॥
मूढेषु शोकश्चपलेषु कोपः
कान्तेषु कामो निपुणेषु विद्या ।
धर्मो दयावत्सु महत्सु धैर्यं
शुष्केन्धने वह्निरुपैति वृद्धिम् ॥ १०६ ॥

A 250 तत् ' राजन् ' यत्त्वयोक्तम् ' असिधाराव्रतमिवारिसंपर्को ऽनुभूत इति ' तत्सत्यम् । किंतु '

स्कन्धेनापि वहेच्छत्रुं कालमासाद्य बुद्धिमान् ।
वहता कृष्णसर्पेण मण्डूका विनिपातिताः ॥ १०७ ॥

A 251 सो ऽब्रवीत् । कथं चैतत् । चिरजीव्याह ।

॥ कथा १० ॥

अस्ति कश्चित्परिणतवयाः कृष्णसर्पो मन्दविषो नाम । स एवं समर्थितवान् । कथं नामानया वृत्त्या सुखं वर्तेयमिति । अथ बहुमण्डूकं ह्रदमुद्दवस्याधृतिपरीतमात्मानं प्रदर्शितवान् । उदकान्तर्गतेनैकेन मण्डूकेन पृष्टः । माम ' यथापूर्वं कथं नानुष्ठानं क्रियत इति । अतो ऽसावाह । भद्र ' कुतो ऽमी मे मनोरथाः । हन्त । अद्य प्रथमप्रदोष एवाहारार्थं मण्डूकनिभेन ब्राह्मणसूनोरङ्गुष्ठो मया दष्टः । तत्समकालमसौ पञ्चत्वमागतः । तत्पित्रा दुःखार्तेनाहं शप्तः ' उक्तश्च । दुरात्मन् ' यत्त्वया ममानपराधी सुतो भक्षितः ' तेन दोषेण त्वं मण्डूकानां वाहनं भविष्यसीति । तदहं युष्मान्प्रत्यागतो वाहनार्थम् । अथ ते हृष्टमनसः सर्व एव मण्डूकराज्ञे जालपादाय निवेदितवन्तः । असावपि समन्त्रिपरिवारो ऽद्भुतमिव मन्यमानः ससंभ्रममुत्तीर्य तत्पृष्ठमाश्रितः । *तदनुक्रमशो यथास्थानभाज उपासिताः । अन्ये चानाप्नुवन्तो ऽनुपदं धावन्ति । मन्दविषो ऽप्यात्मपुष्ट्यर्थमनेकप्रकारान्* गतिविशेषानदर्शयत् । अथ जालपादो लब्धस्पर्श एवाह ।

*न तथा करिणा यानं रथेन तुरगेण वा ।
नरयानेन नावा वा यथा मन्दविषेण मे ॥ १०८ ॥

अथ मन्दविषमन्येद्युश्छद्मग्लानं जालपादो ऽब्रवीत्* । भद्र ' किमद्य मन्दमन्दमुह्यते ' न यथा पुरेति । स आह । देव ' आहारवैकल्याच्छक्तिर्मे न यथापूर्वं वोढुम् । अथासावब्रवीत् । भक्षयात्र क्षुद्रानिति । स आह । ममापीयमाशा । किंतु पादीयाज्ञया कृतप्रसादो भक्षयिष्यामि । इति त्वदायत्तजीवितो ऽस्मि । तत-

स्तानसावनुज्ञातो ऽभक्षयत् । कतिपयैरहोभिर्बलवान्संवृत्तः । सुपरितुष्टश्चान्तर्लीनमवहस्याब्रवीत् ।

मण्डूका विविधाहाराश्छलपूर्वोपसाधिताः ।
कियन्तं कालमक्षीणा भवेयुः खादतो मम ॥ १०९ ॥

अथ जातशङ्को जालपादः किमनेनाभिहितमिति तमपृच्छत् । किं त्वयाभिहितम् । यतो ऽसावाकारप्रच्छादनायाह । न किंचिदिति । पुनश्च प्रतिबोध्यमानो ऽब्रवीत् । स्वामिन् । मयैतदुक्तम् ।

नाहं बुद्धिपरिभ्रष्टो नाहं मण्डूकवाहनः ।
कालमेव प्रतीक्षामि घृतान्धो ब्राह्मणो यथा ॥ ११० ॥
वरं वज्रविनिष्पिष्टो भवेच्छैलो ऽङ्घ्रिपो ऽपि वा ।
मा विप्रशापनिर्दग्धं जन्माभून्मे कदाचन ॥ १११ ॥

अथैवं वर्तमाने जालपादः छद्मकवचनव्यंसितमना नैवावबुध्यते । तत्किं बहुना । भक्षितास्तेन मण्डूकाः । बीजावशिष्टाः प्रमुक्ताः । ये ऽस्य वक्त्रे नानुविशन्ति ।

A 252 यतो ऽहं ब्रवीमि । स्कन्धेनापि वहेच्छत्रुमिति । तत् । राजन् । यथा मन्दविषेण मण्डूका निहताः । तथा मयाप्यशेषाः शत्रवो हताः ।

वने प्रज्वालितो वह्निर्दहन्मूलानि रक्षति ।
समूलकाषं कषति वार्योघो मृदुशीतलः ॥ ११२ ॥

A 253 मेघवर्ण आह । एवमेतत् । अपि च ।

महत्त्वमेतन्महतां नयालंकारधारिणाम् ।
न मुञ्चन्ति यदारम्भं कृच्छ्रे ऽपि व्यसनोदये ॥ ११३ ॥

A 254 तदेवं भवता निःशेषाः शत्रवः क्षताः । सो ऽब्रवीत् । देव । एवमेतत् ।

ऋणशेषमग्निशेषं शत्रुशेषं तथैव च ।
पुनः पुनः प्रवर्तेत तस्माच्छेषं न कारयेत् ॥ ११४ ॥

A 255 मेघवर्ण आह । साधु । ते निश्चयो व्यवसायश्च । अपि च ।

यस्य नीतिप्रयाणेषु प्रयोगतिमिरा दिशः ।
स द्विषां पश्यतामेव षाड्गुण्यं विनियच्छति ॥ ११५ ॥
एवमन्योन्यसंबन्धं षाड्गुण्यं यो ऽनुपश्यति ।
सो ऽबुद्धिनिगडैर्बद्धैरिष्टं क्रीडति पार्थिवैः ॥ ११६ ॥

A 256 सो ऽब्रवीत् । देव । भाग्यसंपन्नस्त्वमसि । किमारब्धं युष्मदर्थे न सिध्यति । अपि च ।

शक्तं युक्तेन संधत्ते युक्तमाशुपराक्रमैः ।
तावुभौ वृद्धिसंपन्नौ क्रमव्ययसमन्वितौ ॥ ११७ ॥
जितात्मनः सत्ववतो धीमतो व्यवसायिनः ।
किं नामैवंविधस्यापि अयातव्यपदे स्थितम् ॥ ११८ ॥
संप्राप्ते व्यसने न सीदति मतिः सिद्धौ न संहृष्यते
प्राप्तौ संहरति क्षमां च कुरुते काले च विस्पन्दते ।
कौलीनानि च संवृणोत्यवहितश्छिद्रेषु जागर्ति य-
स्तस्यैवंचरितस्य वश्यमनसो हस्तस्थिताः संपदः ॥ ११९ ॥
कः कालः कानि मित्राणि को देशः कौ व्ययागमौ ।
को वाहं का च मे शक्तिरिति चिन्त्यं मुहुर्मुहुः ॥ १२० ॥
को ऽहं कौ देशकालौ समविषमगुणाः के नयाः के सहायाः
का शक्तिः को ऽभ्युपायो हितकरणविधौ का च मे दैवसंपत् ।
संपत्तेः को ऽनुबन्धः प्रतिहतवचनस्योत्तरं किं नु मे स्या-
दित्येवं कार्यसिद्धाववहितमनसो नावहास्या भवन्ति ॥ १२१ ॥

A 257 तन्न केवलमेकान्तशः शौर्यं परहत्यं साधयति । कथम् ।

शस्त्रैर्हता हि रिपवो न हता भवन्ति
प्रज्ञाहतास्तु पुरुषाः सुहता भवन्ति ।
शस्त्रं निहन्ति पुरुषस्य शरीरमेकं
प्रज्ञा कुलं च विभवं च यशश्च हन्ति ॥ १२२ ॥

अपि च ।

एकं हन्यान्न वा हन्यादिषुर्मुक्तो धनुष्मता ।
प्राज्ञेन तु मतिः क्षिप्ता हन्याद्गर्भगतानपि ॥ १२३ ॥

A 258 तद्दैवपुरुषकारयोः पादानामयत्नेन कार्यसिद्धयः परिणमन्ति ।

प्रसरति मतिः कार्यारम्भे दृढीभवति स्मृतिः
स्वयमुपनमन्त्यर्था मन्त्रो न गच्छति विप्लवम् ।
फलति सफलस्तत्किं चित्रं समुन्नतिमश्नुते
भवति च रतिः श्लाघ्ये कृत्ये नरस्य भविष्यतः ॥ १२४ ॥

A 259 तत्त्यागबुद्धिशौर्यसंपन्नस्य राज्यमिति । उक्तं च ।

त्यागिनि शूरे विद्या विदुषि मतिमति च गुणो गुणीभवति ।
गुणवति धनं धनाच्छ्रीः श्रीमत्याज्ञा ततो राज्यम् ॥ १२५ ॥

A 260 मेघवर्ण आह । तात । सद्यः फलति नीतिशास्त्रम् । यत्त्वयानुकूल्येनानुप्रविश्योलूकराजो ऽपमर्दः सपरिजनो निःशेषः कृतः । चिरजीव्याह । देव ।

तीक्ष्णोपायप्राप्तिगम्यो ऽपि यो ऽर्थ-
स्तस्याप्यादौ संश्रयः संप्रयुक्तः ।
उद्वीच्याग्रे लक्ष्मभूतो वनानां
नानभ्यर्च्य च्छिद्यते पादपेन्द्रः ॥ १२६ ॥

A 261 अथवा । स्वामिन् । किं तेनाभिहितेन । यदन्तं क्रियाकालरहितम् । साध्वभिहितम् ।

अनिश्चितैरध्यवसायभीरुभि-
र्यथेष्टसंलापरतिप्रयोजनैः ।
फले विसंवादमुपागता गिरः
प्रयान्ति लोके परिहासवस्तुताम् ॥ १२७ ॥

A 262 न च लघुष्वपि कर्तव्येषु धीमद्भिरनादरः कार्यः । यत्कारणम् ।

शक्यामि कर्तुमिदमल्पमयत्नसाध्य-
मत्रादरः क इति कृत्यमवेक्षमाणाः ।
केचित्प्रमादतमसा परितापदुःख-
मापत्सु सङ्गसुलभं पुरुषाः प्रयान्ति ॥ १२८ ॥

A 263 तदद्य मम । विभो । निर्जितारेरद्यापूर्वनिद्रालाभो भविष्यति । कथम् ।

निःसर्पे हतसर्पे वा वस्तुं हि भवने सुखम् ।
दृष्टनष्टभुजंगे तु निद्रां न लभते नरः ॥ १२९ ॥

तेन हि

विस्तीर्णव्यवसायसारमहतां स्निग्धैः प्रयुक्ताशिषां
कार्याणां नयसाहसोन्नतिमतामिच्छापदारोहिणाम् ।
मानोत्सेकपराक्रमव्यसनिनः पारं न यावद्गताः
सामर्षे हृदये ऽवकाशविषयास्तावत्कथं निर्वृताः ॥ १३० ॥

A 264 तदवसितकार्यारम्भस्य हि मे विश्राम्यतीव मनः । कथम् ।

विशति ज्वरमिव हृदयं गात्रं लघुतरमिवावसितसारम् ।
तीर्णार्णवस्य च मनो भवति रिपाववसितप्रतिज्ञस्य ॥ १३१ ॥

A 265 तदिदमधुना निहतकण्टकं राज्यं प्रजारञ्जनरक्षासमर्थो भूत्वा पुत्रपौत्रानुक्रमेण चामरच्छत्त्रासनश्रीश्चिरं भुङ्क्ष्व । अपि च ।

प्रजां न रञ्जयेद्यस्तु राजा रक्षादिभिर्गुणैः ।
अजागलस्तनस्येव तस्य नाम निरर्थकम् ॥ १३२ ॥

गुणेषु रागो व्यसनेष्वनादरो
रतिः सुनीतेषु च यस्य भूपतेः ।
चिरं स भुङ्क्ते चलचामरांशुकां
सितातपत्राभरणां नृपश्रियम् ॥ १३३ ॥

A 266 न च त्वयावाप्तराज्यो ऽहमिति कृत्वा श्रीमदेनात्मा व्यंसयितव्यः । यत्कारणम् । चला हि राज्ञां विभूतयः । कथम् । वंशारोहकमिव राज्यलक्ष्मीरारोप्य क्षणनिपाता । पारतरसवत्प्रयत्नैरपि दुर्वार्या । स्वाराधिताप्यन्ते विप्रलम्भिनी । वानरपतिरिवानेकचित्तचपला । पद्मपत्त्रोदकराजिरिव दुःसंश्लेषणीया । पवनगतिरिव चटुला । अनार्यसंगतिरिवास्थिरा । आशीविषजातिरिव दुरुपकार्या । संध्याभ्ररेखेव मुहूर्तरागा । जलबुद्बुदपङ्क्तिरिव स्वभावभङ्गुरा । शरीरप्रकृतिरिव क्रियमाणकृतघ्ना । स्वप्नलब्धद्रविणराशिरिव दृष्टनष्टा । किं बहुना ।

छलितानेकपुरुषा बह्वक्षायविकारिणी ।
श्रीः पिशाचीव सा रक्ष्या गुणमन्त्रेण नित्यशः ॥ १३४ ॥

यदैव राज्ये क्रियते ऽभिलाष-
स्तदैव देया व्यसनेषु बुद्धिः ।
घटा हि राज्ञामभिषेककाले
सहाम्भसैवापदमुद्गिरन्ति ॥ १३५ ॥

A 267 न सो ऽस्ति । यो न गम्यो ह्यापदाम् ।

रामप्रव्रजनं बलेर्नियमनं पाण्डोः सुतानां वनं
वृष्णीनां निधनं नलस्य नृपते राज्यात्परिभ्रंशनम् ।
सौदासं तदवस्थमर्जुनवधं संचिन्त्य लङ्केश्वरं
सर्वं कालवशादुपैति पुरुषः कः कं परित्रायते ॥ १३६ ॥

तथा च ।

क्व च दशरथः स्वर्गे युद्धा सुरेन्द्रसुहृद्गतः
क्व च जलनिधेर्वेलां बद्धा नृपः सगरो गतः ।
क्व च करतलाज्जातो वैन्यः क्व सूर्यतनुर्मनु-
र्ननु भगवता कालेनैते प्रबोध्य निमीलिताः ॥ १३७ ॥

नृपतिः सचिवाः प्रमदाः पुराणशोच्यानि काननवनानि ।
स च ते च ताश्च तानि च कृतान्तदंष्ट्राविनष्टानि ॥ १३८ ॥

अपि च ।

दुःसंरक्ष्यं प्रार्थितं सर्वभूते-
श्चित्रं यन्त्रं दम्भगाम्भीर्यवाहि ।
वह्निस्पर्शं लोमहर्षावनद्धं
मृत्योर्द्वारं वज्रदंष्ट्रेव राज्यम् ॥ १३९ ॥

A 268 तेन ह्यवाप्य भोगान्ससुहृदः सुखानि सेवध्वम् । उपभोगसारा विभूतयः । अनुपभोगनिष्फला लक्ष्मीरन्यप्रकारा दरिद्रता । तन्नरेन्द्रता नामेयं नयानयाभ्यामलंक्रियते । कथम् ।

श्रुतेन बुद्धिर्व्यसनेन मूर्खता
मदेन नागः सलिलेन निम्नगा ।
निशा शशाङ्केन धृतिः समाधिना
नयेन चालङ्क्रियते नरेन्द्रता ॥ १४० ॥

A 269 स च नयो नाम सकलराज्यार्थमन्त्रधारिणां वृद्धानामविकल्पवचनकारित्वम् । तद्भवतास्मच्छरीराभावे ऽपि राज्यर्यौवनमदमत्तेन भूत्वा न वृद्धवचनमवमन्तव्यम् । अपि च ।

वृद्धवाक्यं हि कर्तव्यं नरेन्द्रेणार्थसिद्धये ।
हंसयूथं वने बद्धं वृद्धवाक्याद्विमोचितम् ॥ १४१ ॥

A 270 मेघवर्ण आह । कथमेतत् । सो ऽब्रवीत् ।

## ॥ कथा ११ ॥

अस्ति कस्मिंश्चिन्महावने सकलतरुप्रिवाधिपतिरुत्तुङ्गशिखरो निरन्तरदलसंरुद्धदिवसकरकरनिवहो महाञ्छल्मलिवृक्षः । तस्मिन्दुरारोहतया निर्भीरनेकहंसकुलपरिवृतः क्षीरोदो नाम हंसराजः प्रतिवसति स्म । कदाचिच्छाकुनिकस्तद्वनमटमानो ऽस्तशिखरगते भगवति सवितरि तस्य शल्मलेरधः पर्यटनखिन्नो निषसाद । अत्रान्तरे हंसराजः सकलहंसकुलकोलाहलेनाशामुखं मुखरयञ्छिखरिणामालीनः । अतस्तं दृष्ट्वा शाकुनिकः क्रूरकर्माचिन्तयत् । अहो विधातुरचिन्त्यः प्रभावः । न मया सकलवनराजिमण्डलभ्रमणखिन्नेनापीदं श्रोत्रमनोह्लादि हंसकुलमयत्नेनैवासादितम् । अन्यच्च ।

तुङ्गश्चायं वनस्पतिरवलोकयितुमपि न शक्यते ! किं पुनरारोढुम् । तत्कथमत्र मया जालवितानं कर्तव्यम् । अथास्त्युपायः । अस्य तरोरधस्तादतिमुक्तकान्रोपयिष्यामि ! येन तदारूढवलयनिकरः सुखारोहो भविष्यति । इति चिन्तयतस्तस्य नक्षत्रचक्रशोभिता ययौ क्षणदा । अथासावपि हंसराजो हंसपरिवृतः क्षपां क्षपयित्वा यथेष्टां दिशमाहारार्थमुपगतः । ते शाकुनिकोप्ताश्चातिमुक्तकाः क्रमेण संवर्धितुमारब्धाः । यतो दृष्ट्वा वृद्धहंसो ऽमृतप्रभो नाम तान्हंसानाहूय जराजर्जरितस्वर इदमाह । भोः ! किं न पश्यथ । अयं महाननर्थः । केनाप्यपुण्यभाजा विनाशमस्माकं चिकीर्षतातिमुक्तका रोपिताः । यावदेते ऽल्पाङ्कुराः ! तावच्चञ्चुघातैः शीघ्रमुन्मूल्यन्ताम् । अन्यथा दुश्छेद्ये ऽस्मिन्वनस्पतावारूढो व्यक्तमस्मान्न चिरादेव नाशयिष्यतीति । उक्तं च ।

नोपेक्षितव्यो विद्वद्भिरनर्थो ऽल्पो ऽप्यवज्ञया ।
वह्निरल्पो ऽपि संवृद्धः कुरुते भस्मसाद्वनम् ॥ १४२ ॥

ततस्तस्यैवं वदतस्ते यौवनमदान्धाः किमयं वृद्धः प्रलपतीत्युक्त्वावधीरितवन्तः । कालेन चाल्पीयसा वल्लीवलितशाखानिवहः स शाखी संवृत्तः । स च हंससमूहो यथाभिमतं दिग्भ्यः प्रत्यहमाहारकृत्यं कृत्वा निशामतिवाहयति स्म । एकदा त्वसौ शाकुनिकस्तस्मिंस्तरुशिखरे जालं वितत्य गृहं जगाम । बद्धं च रात्रौ हंसयूथमुत्पतितुमक्षमं सहसैवोत्कूजितम् । ततो विपरिवर्तमानपक्षावलीवलितशिरोधरमतीव कोलाहलमकरोत् । तदवसाने चामृतप्रभो वृद्धहंसः परिशुष्ककण्ठो दीनस्वनः पुनरपि तानब्रवीत् । मूर्खाः ! कथमस्मदीयवचनमवधीरयद्भिरवाप्तं फलमधुना । किमत्र करिष्यथ । इत्युक्त्वा तूष्णीं बभूव । अथ ते सर्व एव

तच्चरणन्यस्तमस्तकाः प्रणम्योचुः । बाढम् । न कृतमस्माभिरासन्नविनाशमोहितैः । तदधुना भवानेवात्र नः परायणं केवलमिति । सो ऽब्रवीत् । सर्व एव भवन्तो गतासव इवाधःशिरसः प्रलम्बमानाः परिवर्तिताक्षितारकास्तिष्ठन्तु । यावदसाववलोक्य पापकर्मा स्वयं मृता इति तरोरधस्तादेकैकमशेषतः क्षिपति । क्षितिपतितैश्च मदीयसंज्ञां श्रुत्वा युगपद्युष्माभिरन्तरिक्षमुत्पतितव्यम् । एवमनुष्ठिते यद्वृत्तम् । तदनाख्यातमेव भवद्भिरवधारितम् ।

A 271 अतो ऽहं ब्रवीमि । वृद्धवाक्यं हि कर्तव्यमिति । अपि च ।

मुदं विषादः शरदं हिमागम-
स्तमो विवस्वान्समयं कृतघ्नता ।
प्रियोपपत्तिः शुचमापदं भयं
श्रियं समृद्धामपि हन्ति दुर्नयः ॥ १४३ ॥

इति ॥

॥ इति संधिविग्रहं नाम काकोलूकीयं तृतीयं तन्त्रं समाप्तम् ॥

## ॥ लब्धनाशं नाम चतुर्थं तन्त्रम् ॥

A 272 अतः परमिदमारभ्यते लब्धनाशं नाम चतुर्थं तन्त्रम् । यस्यायमाद्यः श्लोकः ।

प्राप्तमर्थं तु यो मोहात्सान्त्वतः परिमुञ्चति ।
स तथा वञ्च्यते मूढो जलजः कपिना यथा ॥ १ ॥

A 273 अस्ति । कस्मिंश्चित्समुद्रतीरे वलीवदनको नाम वानरराजः प्रतिवसति स्म । वृद्धत्वादसामर्थ्येन चान्येन नवयौवनसंपन्नेन कपिनातीवेर्ष्यानलप्रताप्यमानहृदयेनामर्षित्वाद्बद्धवैरेण तस्मात्स्वयूथान्निरस्तः कालं यापयति स्म ।

A 274 कस्मिंश्चित्तीरे मधुगर्भो नामोदुम्बरः । तेनाहारेण प्राणयात्रां करोति । अथ कदाचित्तस्य भक्षयतः करादुदुम्बरफलं पतितम् । तेन चाम्भसि पतता मनोहरः कलरव उत्पन्नः । तं श्रुत्वा वानरः पुनः पुनरन्यान्युदुम्बराणि प्रक्षिपति स्म ।

A 275 अथ तस्याधस्तात्क्रशको नाम शिशुमारस्तानि प्रकामतो लब्ध्वा भक्षयति स्म । उत्पन्नप्रीतिसौहार्दश्च वलीवदनस्तेन सह स्वयूथाद्भ्रंशमपि विस्मृतवान् । शिशुमारो ऽप्यतीव स्नेहाक्षिप्तहृदयः स्वगृहगमनकालक्षेपमकरोत् ।

A 276 अथ तस्य जाया सखीमध्यगता तद्विरहात्परितप्तहृदया । क्वासौ मम दयितः । किं बहिः करोत्यतिप्रसक्त्या । सुप्रभूतश्चाद्य कालः । त्रिवर्गं परिहार्यात्मानं नावधारयति । अथ तस्याः सख्येकाब्रवीत् । कुतस्ते गृहं धनं वा तेन भर्त्रा । यस्य त्वं चरितानि न जानासि । स तु मया प्रत्यक्षमेव दृष्टः कयापि वानर्या सह समुद्रतीरैकदेशे परमप्रीतिपुरःसरं रहसि रममाणः । तदेवं ज्ञात्वा यत्ते करणीयम् । तदहीनकालं क्रियतामिति ।

A 277 तच्च श्रुत्वा शिशुमारभार्या परं मनस्तापमाप । सर्वव्यापारांश्च गृहगतानुत्सृज्य मलिनवसना तैलाभ्यक्तशरीरा शयनतलगताधृतिपरीतगात्री सखीपरिवृतावस्थिता ।

A 278 शिशुमारो ऽपि वलीवदनप्रीत्यातिक्रान्तवेलो गृहमागतो ऽपश्यज्जायां तदवस्थाम् । अब्रवीच्चाविग्नहृदयः । किमस्या अस्वास्थ्यकारणम् । इति परिजनमपृच्छत् ।

मूकतया न काचिदपि सखी कथयति स्म । सादरमेव मुहुर्मुहुरपृच्छत् । अथ तत्रैका द्वितीयमिव हृदयं शिशुमारभार्यायाः । सा परमावेगं सूचयन्त्यब्रवीत् । आर्य । अशक्यो ऽयं व्याधिरस्याः । विनष्टा नामेयमिति मन्तव्यम् । नास्याः प्रत्यापत्तिरस्ति । एतच्छ्रुत्वा शिशुमारः परं विषादमगमत् । प्रियकलत्रतया चाब्रवीत् । यदि मज्जीवितेनापि कुशलमस्याः । तदिमे प्राणा उपयुज्यन्तामेतदर्थमिति । साब्रवीत् । भद्र । अस्त्युपाय एक एवास्या व्याधेः । यदि वानरहृदयोपपत्तिरस्ति । ततो ऽस्या जीवितम् । अन्यथातिक्रान्ता नामेयमिति । एतत्स्त्रीरहस्यमिति ।

A 279 ततो ऽसावचिन्तयत् । कथं वानरहृदयस्य लाभो ऽन्यत्र वलीवदनकात् । तदप्यतिगर्हितं धर्मविरुद्धं च । अथवा ।

किं कलत्रं प्रधानं स्यादुत मित्रं गुणाधिकम् ।
कलत्रमित्रयोर्नूनं कलत्रमतिरिच्यते ॥ २ ॥

कथम् ।

तस्मात्त्रिवर्गो ऽविकलस्ततो मित्रं ततो यशः ।
सर्वलोकान्वितं चैव कस्तन्न बहु मन्यते ॥ ३ ॥

A 280 यत एवमवस्थिते ऽवश्यमेवेदमितः संभावयामि । कस्मात् ।

एकः सखा प्रियो भूय उपकारी गुणान्वितः ।
हन्तव्यः स्त्रीनिमित्तेन कष्टमापतितं मम ॥ ४ ॥

A 281 बहुधैवं विचिन्त्य गमनव्याहतमना वलीवदनकं मन्दं मन्दमुपश्लिष्टः । तेन चाभिहितः । भद्र । किमद्य व्याक्षेपकारणं भवतः । सो ऽब्रवीत् । वयस्य । दुःखमिदमुच्यते । न शक्नोमि भवतो ऽतिप्रसङ्गं कर्तुम् । यत्कारणम् । एतावतापि कालेनैकान्तोपकारिणो भवतो न मया किंचिदपि प्रत्युपकर्तुं शकितम् । अपि च ।

प्रयोजनवतीं प्रीतिं लोकः समनुवर्तते ।
त्वं तु वानरशार्दूल निष्प्रयोजनमत्सरः ॥ ५ ॥

A 282 अथवा युक्तमेवेदं भवतः ।

उपकर्तुमनुपकर्तुः प्रियाणि कर्तुः कृतान्यनुस्मर्तुम् ।
विनिपतितांश्चोद्धर्तुं कुलान्वितानामुचितमेतत् ॥ ६ ॥

A 283 सो ऽब्रवीत् । नन्वयमेवास्मो विकारः । यत्स्वदेशबन्धुपरित्यागे ऽपि कृते संपन्नप्रीतियोगाद्भवन्तमाश्रित्यानुद्विग्नः सुखं यापयामीति । साध्विदमुच्यते ।

शोकारातिभयत्राणं प्रीतिविस्रम्भभाजनम् ।
केन रत्नमिदं सृष्टं मित्रमित्यक्षरद्वयम् ॥ ७ ॥

A 284 यच्च भवताभिहितम् । गृहगमनदारदर्शनैकपात्राभिसंबन्धी मया भवान्न कृतः । तत्किमनेन । सामान्यजनस्यायं संबन्धः । अपि च ।

खले नटानामिव दारदर्शनं
गवामिवापार्थकमेव भोजनम् ।
सन्तः प्रकृत्यैव हि येन संगमं
कुर्वन्त्ययत्नादपि तस्य यद्धितम् ॥ ८ ॥

A 285 सो ऽब्रवीत् ।

किमत्र चित्रं यदि सज्जनो जनः
करोति विद्वज्जनसाधुपूजनम् ।
करोति यन्नीचकुलोद्भवो जन-
स्तदद्भुतं शैत्यमिवार्कमण्डले ॥ ९ ॥

तथापि ।

मित्रं वा बन्धुं वा नाति प्रणयपीडितं कुर्यात् ।
स्वं वत्समति पिबन्तं विषाणकोट्याक्षिपति धेनुः ॥ १० ॥

A 286 तत् । भद्र । ममापि भवते किंचित्प्रत्युपकरणमस्ति । यो ऽयमन्तर्द्वीपकः समुद्रमध्ये । अत्र मयाभिनवयौवनसंपन्ना रूपवत्यस्तिस्रो वानर्यो दृष्टपूर्वाः प्रतिवसन्ति स्म । अमृतास्वादतुल्याः कल्पवृक्षसदृशास्तरवः । तत्राहं त्वां पृष्ठमारोप्य प्रापयामीति । एवमुक्तो ऽसावगमत्परं परितोषम् । आह च । साधु । भद्र । प्रियं ममेदम् । क्षिप्रं मां तत्र प्रापयेति । अथासौ शिशुमारस्तं विनाशधर्माणं विश्वासोपगतं वानरं पृष्ठे गृहीत्वा नयंस्तं चिन्तयामास । कष्टम् ।

स्त्रीकार्यमिदमत्यर्थं गरीयः सारमेव च ।
तदर्थं दारुणं कर्म निन्दामि च करोमि च ॥ ११ ॥

A 287 अथ मार्गे शिशुमारो वलीवदनकमाह । * * * * * * * * * * * * *
* * * * * * * * * * * * * * * * * * * * * * * * * * * * * * * *

A 288 * * * दिति । तच्छ्रुत्वा वलीवदनकः स्वात्मानं गतासुमिव मन्यमानः परं विषादमगमत् । आह च । भद्र । शोभनं त्वया कृतम् । किंत्वादावेव नाख्यातम् । अन्यथाहं तद्धृदयं गृहीत्वैवागतो ऽभविष्यम् । साधु चेदमुच्यते ।

आदावुत्सृज्य कार्याणि पश्चाच्च प्रार्थयन्ति ये ।
ते लोके हास्यतां यान्ति पलाण्डुहरणादिव ॥ १२ ॥

A 289 शिशुमार आह । कथमेतत् । सो ऽब्रवीत् ।

## ॥ कथा १ ॥

अस्ति कस्मिंश्चिन्नगरे पलाण्डुचौरो गृहीतः । स च संयम्य राजकुलं नीतः ' उक्तश्च धर्माधिकारकैः । भद्र ' रूपकशतं दण्डं प्रयच्छ ' कशाप्रहारशतं वा सहस्व ' पलाण्डुशतं वा भक्षयस्वेति । अन्यथा नास्ति ते मोक्ष इति । अथ मूढमतिरसौ व्यजिज्ञपत् । पलाण्डुं भक्षयामि । इत्युक्त्वा यावत्सप्राष्टौ पलाण्डुस्तम्बकानि भक्षयति ' तावत्कटुकत्वात्स्रवन्नेत्रनासापुटः प्रकटितफेनपूरितवदनः प्रोवाच । नास्मि भक्षयितुं समर्थः ' न च रूपकशतं दातुम् । यतः कशाताडनमेव सोढुं वरयामि । अथ कशाप्रहाराः कतिचिदस्मै यावद्दीयन्ते ' तावदुच्चैः प्रोवाच । नाहमेतानपि सोढुं शक्तो रूपकशतं ददामि सोदयम् । तन्मां परित्रायध्वमिति । एवं गतो जनहास्यताम् ' स्वशरीरकदर्थनां चाप्तवान् ।

A 290 अतो ऽहं ब्रवीमि । आदावुत्सृज्य कार्याणीति । तदहमहृदयः किं तत्र गत्वा करिष्यामीति । तथा च क्षतार्थस्य शोभनं लज्जायासकाशगमनम् । उक्तं च ।

धर्ममर्थं च कामं च त्रितयं यो ऽभिवाञ्छति ।
सो ऽरिक्तपाणिः पश्येत ब्राह्मणं नृपतिं स्त्रियम् ॥ १३ ॥

A 291 तत् ' सखे ' हस्तगतेन हृदयेन लज्जायासुखं पश्यामि । असावाह । क्व तद्धृदयम् । वानरो ऽब्रवीत् । तस्मिन्नेवोदुम्बरे । शिशुमारो ऽचिन्तयत् । व्यर्थः को ऽयमारम्भः । मित्रवधादपि तदवस्थानमेव व्याधिकारणम् । आह च । भद्र ' गच्छावः शीघ्रं हृदयार्थम् । सो ऽब्रवीत् । वयस्य ' एतदर्थं यदि कारणं भवतः ' तच्छीघ्रं प्रापयेति ।

A 292 सो ऽब्रवीत् । नूनम् । इति प्रतिनिवृत्य तस्मिन्नुदुम्बरे वक्रमनोरथो वानर उत्प्लुत्य शाखामधिरूढो ऽचिन्तयत् । हन्त ' लब्धाः प्राणाः । शिशुमारस्त्वधस्तादब्रवीत् । भद्र ' तद्धृदयं गृहीत्वा गच्छावः । स विहस्याब्रवीत् । मूर्ख ' किं शरीराद्बहिर्हृदयं तिष्ठति ।

शाठ्यादिच्छसि मां हन्तुं प्रतिशाठ्यं कृतं मया ।
मायां तु भवतः कृत्वा मृत्योरात्मा विमोचितः ॥ १४ ॥

A 293 शिशुमारो ऽब्रवीत् । भद्र ˈ हृदयं यदि नास्ति ˈ तथाप्यागच्छ । अहमन्येनौषधक्रमेण तस्या व्याधिप्रतीकारं करिष्ये । वानरो ऽब्रवीत् । दुष्ट ˈ नाहं गर्दभः ।

आगतश्च गतश्चैव गत्वा च पुनरागतः ।
अकर्णहृदयो मूर्खस्तत्रैव निधनं गतः ॥ १५ ॥

A 294 सो ऽब्रवीत् । कथमेतत् । वानर आह ।

## ॥ कथा २ ॥

अस्ति ˈ कस्मिंश्चिद्वनोद्देशे सिंहः प्रतिवसति स्म । तस्यैको गोमायुरनुचरः । कदाचिदसाध्यया रुजा सिंहो ऽभिभूतो ऽकिंचित्करः संवृत्तः क्षुत्क्षामकण्ठेन गोमायुनाभिहितः । कथमस्माकं प्राणयात्रेति । सो ऽब्रवीत् । भद्र ˈ अयं व्याधिः केवलं गर्दभकर्णहृदयेन भेषजेन निवर्तते ˈ अन्यथा न । सो ऽब्रवीत् । भद्र ˈ आनयामि गर्दभमिति । एवमुक्त्वा रजकगर्दभसमीपं गत्वाह । भद्र ˈ किमसि कृशः । सो ऽब्रवीत् । वयस्य । महता वस्त्रभारेण । प्रतिदिनं न चाहारमस्माद्दुरात्मनो लभे ऽहमिति । सो ऽब्रवीत् । किमनया यातनया । अहं भवन्तं तत्र नयामि ˈ यत्र भवान्स्वर्गगतमिवात्मानं मन्यते । सो ऽब्रवीत् । कथय ˈ कथम् । *स आह । अस्यां वनराज्यामभिनवयौवनसंपन्नाश्चतस्रो रूपवत्यो रासभ्यो ऽदृष्टपूर्वा अपि मन्ये ऽनेनैव निर्वेदेनापक्रान्ताः । तासामहं भवन्तं मध्ये प्रापयामीति । तच्च श्रुत्वा तथा नामेति प्रतिपन्नः ˈ उपनीतश्च सिंहान्तिकं मूर्खः । क्रमप्राप्तं च रासभमासाद्यातिहर्षमुपरिभागेनातिक्रान्तः सिंहो गर्दभेन ।

वज्राघातमिव मन्यमानः किमिति तस्मात्कथंचिदपेतो ऽतीवत्रस्तहृदयः प्रतिनिवृत्त्यानवलोकयन्गर्दभानामेव सकाशं गतः ।

अथ गोमायुना सिंहो ऽभिहितः । किं त्वमेव लोकं प्रकाशयसि । सिंहो ऽहमनन्यसत्त्वतुल्यः । को ममाधृष्य इति । यस्तावद्गर्दभमुपनीतं हन्तुमसमर्थः । स त्वं कथं सपत्नाञ्जेष्यसि । स आह । असंशयमेतदेव । पुनस्तावदानीयताम् । अधुना तं हनिष्यामीति । स आह । सज्जो भवास्मिन् । मया दृष्टापदानो ऽपि प्रज्ञासामर्थ्यादानीतो यथा न पुनस्तथैव विक्रमिष्यति । इति विहस्य प्रायात् ।

तत्सकाशं गत्वाब्रवीत् । किं भवान्प्रतिनिवृत्त इति । स आह । महाननर्थो मे समुत्पन्न आसीत् । न जाने । गिरिशिखराकारं किमपि सत्त्वं ममोपरि निपतितम् । यथायुःशेषतयाहमपेतस्तस्मात् । स आह । न ते विदितम् ।

प्रायेण तु नृणां लोके त्रिवर्गमभिवाञ्छताम् ।
असन्तो ऽपि हि वै विघ्ना उत्पद्यन्ते स्वभावतः ॥ १६ ॥

गर्दभ आह । मयापि श्रुतम् । अपूर्वमेवेदम् * * * * * * * * * * * * * * अग्रतस्तव गच्छामीति बलात्कारेण नीतो हतश्च । सिंह आह । भद्र । अयमौषधोपयोगः । देवार्चनादि कृत्वोपयुज्यते । ततः सिद्धिं करोति । यतस्त्वमेनं निभृतो भूत्वाभिरक्ष । यावदहं * * * * पर्याप्तिं कृत्वागच्छामीति । गते च तस्मिन्गोमायुश्चिन्तयामास । कथं सिंहस्य मम चैकान्तित्वम् । एतदस्माकं तु न युज्यते । नित्यमेते मित्रभूताः । तेन हि कुतो रासभं लप्स्ये । अविघ्नमस्त्वौषधोपयोगस्येति प्रणम्य लोकपालानुपयोजितवान्कर्णौ हृदयं च । भक्षयित्वा सुपरिमृष्टवक्त्रचरणो ऽवस्थितः । आगतश्च सिंहः प्रद-

क्षिणं कुर्वन्न दृष्टवान्कर्णौ हृदयं च । आह च । किमिदं वृत्तम् । कथय । क्व तौ कर्णौ सहृदयौ । असावाह । कुतो ऽस्य कर्णौ हृदयं वा । यो ऽयं मूर्ख आगतश्च गतश्चेति ।

A 295 अतो ऽहं ब्रवीमि । नाहं गर्दभः । न चाहं त्वया पुनः प्रक्रामयितुं शक्यः । गच्छ ।

छातकवचनैः* कार्यारम्भैस्त्वयाप्यनुवर्तितं
निभृतनिभृतैः प्रज्ञादोषैर्मयाप्युपलक्षितम् ।
अतिशयगुणं त्वत्पाण्डित्यं मयाप्यनुवर्तितं
छातकवचनैः कालो नीतः समेन समं गतम् ॥ १७ ॥

॥ इति तन्त्राख्यायिके लब्धनाशं नाम चतुर्थं तन्त्रम् ॥




A 303 अतः परमपरीक्षितकारित्वं नाम पञ्चमं तन्त्रम् । यस्यायमाद्यः श्लोकः ।

यो ऽर्थतत्त्वमविज्ञाय वशं क्रोधस्य गच्छति ।
सो ऽचिराद्भ्रश्यते मित्राद्ब्राह्मणी नकुलादिव ॥ १ ॥

A 304 एवमनुश्रूयते ।

अस्ति । गौडदेशे शुभगोत्रो देवशर्मा नाम ब्राह्मणः प्रतिवसति स्म । तस्य च भार्या यज्ञदत्ता नाम । सा कदाचिद्गर्भिणी संवृत्ता । तां च दृष्ट्वा देवशर्मा परं परितोषमुपागतः । एवं चाचिन्तयत् । महन्मे कल्याणमुपस्थितमपत्यलाभाय । ब्राह्मणीं चाब्रवीत् । कृतार्थासि । दारकं जनयिष्यसि । तस्याहं बहुमनोरथो जातकर्मनामकरणादिसंस्कारान्करिष्ये । स च मे गोत्रधरो भविष्यतीति । एवं ब्राह्मण्यभिहिताब्रवीत् । को जानाति । दारको भविष्यति न वेति । उक्तं च ।

अनागतवतीं चिन्तां यो नरः कर्तुमिच्छति ।
स भूमौ पाण्डुरः शेते सोमशर्मपिता यथा ॥ २ ॥

A 305 सो ऽब्रवीत् । कथं चैतत् । साह ।

## ॥ कथा १ ॥

अस्ति । कश्चिद्ब्राह्मणसूनुर्विद्याप्रसङ्गेन कालं नयति स्म । तस्य कस्मिंश्चिद्वणिग्गृहे नैत्यकं वर्तते । स च यदा तत्र न भुङ्क्ते । तदा सक्तुसेतिकां लभते । तां चावासं नीत्वा घटे प्रक्षिप्य स्थापयति । एवं च तस्य बहुना कालेन स घटः सक्तुभिः संपूर्णः ।

कदाचित्तस्य घटस्य नागदन्तके स्थापितस्याधस्ताच्छयनगतो ऽसौ ब्राह्मणो दिवासुप्तप्रतिबुद्धः ' एवं च चिन्तयामास । महार्घं धान्यं वर्तते ' किमुत कृतान्नं सक्तवः । तन्मे विंशतिमात्रकाणां रूपकाणां सक्तवः सन्ति । तांश्चाहं विक्रीय छगलिका विंशतिमात्रा उपावर्तयिष्यामि । षण्मासाश्च प्रसविष्यन्ते ' पञ्चाब्दानन्तराच्च चतुःशतसंख्या बह्व्या भविष्यन्ति । लोके च श्रूयते ' चतसृभिरजाभिरेका धेनुस्तरुणी जीववत्सा च बहुक्षीरा लभ्यते । सो ऽहं ताभिरजाभिरेव गवां शतं परिवर्तयिष्यामि । सर्वं च गोशतात्संभवतीति तदुत्पन्नदान्तैः सर्वबीजवापनं करिष्यामि । ततः सर्वधान्यस्य महान्निचयो भविष्यति । शोभनं च वेश्म प्राकाराभ्यन्तर्हितं करिष्यामि । दासीदासबहुलां च मम महतीं संपदं दृष्ट्वावश्यं कश्चिद्ब्राह्मणः सुरूपां कन्यां दास्यति । तस्यां च दीर्घायुषमरोगं वंशधरं दारकं जनयिष्यामि । तस्य चाहं यथाविधि जातकर्मादि कृत्वा सोमशर्मेति नाम करिष्यामि । वल्गति च दारके ब्राह्मणी कर्मासक्ता गवामभ्यागमनकाले । प्रमादाद्दारकं नाभिरक्षयिष्यसीति तामहं ब्राह्मणीं पुत्रस्नेहाभिभूतहृदयो लगुडेन ताडयि*ष्यामि । ततस्तेनासावेवमभ्याहतो घटः ' येन तस्यैवोपरि शतकपालो व्याविद्धसक्तुर्निपतितः । अथासौ ब्राह्मणः स्वप्नरूपमिव तदन्यदचिन्तयत् । किमिदमिति परं वैलक्ष्यं जनहासं चोपगतः ।

A 306 अतो ऽहं ब्रवीमि । अनागतवती चिन्ता न कार्या । दृष्टे कार्ये क्रिया वर्तते । न भित्तिं विना चित्रकर्मेति ।

A 307 संपूर्णे च प्रसवकाले प्रसूता ब्राह्मणी दारकम् । जातं दशदिवसोत्थाने च कृतकर्माणं दारकं परिरक्षार्थं पितरि विन्यस्य ब्राह्मण्यशुचिवस्त्रशोधनायात्मनः शौचनिमित्तं च संनिकृष्टां सरितमवतीर्णा । ब्राह्मणो ऽपि दारिद्र्यदोषादसहायतया

चात्मनैव धृतस्तं बालमभिरक्षितवान् । अथ राजकुलात्पर्वके प्रवचनकाराद्दाननिमित्तं राजमहिष्या दास्यनुप्रेषिता । शब्द्यमाने ऽसौ ब्राह्मण आह्वयाचिन्तयत् । कमवस्थापयामि दारकरक्षणार्थमिति । एवमवस्थिते यस्तस्याग्निहोत्रशरणे गृहे पुत्रनिर्विशेषो नकुलो धान्यकणादिभिः संवर्धितः । तमेवावस्थाप्य गतो ऽसौ ब्राह्मणः । नकुलो ऽप्यचिरादपश्यन्महाभोगिनं क्षितिविवरान्निर्गतं बालकस्याभ्याशमायान्तम् । तं च दृष्ट्वा क्रोधसंरक्तनयनो ऽतीवस्फुरद्वदनदशनचरणः सहसोत्पत्य तस्योपरि संनिपतितः । खण्डशश्च तं कृत्वासृग्दिग्धवक्त्रचरण एवायान्तं ब्राह्मणं दृष्ट्वा सुपरितुष्टमनास्तन्निवेदनाय बहिर्निश्चक्राम । अथासावपरीक्षितकारी ब्राह्मणस्तं नकुलं रुधिररञ्जितमुखं दृष्ट्वाचिन्तयत् । कथं भक्षितो बभ्रुणा मम पुत्रकः । इति यष्टिकया तं जघान । हत्वा तं सत्वरं गृहमनुप्रविष्टः । अथापश्यदव्यङ्गं तथैव पुत्रकं सुप्तम् । तदासावात्मानं भूमौ प्रक्षिप्य । हा हतो ऽस्मि मन्दबुद्धिः । किमिदमकृत्यं मया कृतमिति शरीरमताडयत् । आगता च ब्राह्मणी । तयोक्तम् । किमिदम् । ब्राह्मण । कथं चेति । यतो ऽसौ यथावृत्तमाख्यातवान् । आह च ।

कुदृष्टं कुमतिज्ञातं कुश्रुतं कुपरीक्षितम् ।
पुरुषेण न कर्तव्यं नापितेन यथा कृतम् ॥ ३ ॥

108 साब्रवीत् । कथं चैतत् । स आह ।

## ॥ कथा २ ॥

अस्ति । कस्मिंश्चिन्नगरे भूतपूर्वो वणिक्पुत्र उत्सन्नधनवंशविभवो दारिद्र्याभिभूतः शीर्णगृहदेशे वृद्धधात्रीसमेतो बालभावादारभ्य तया वृद्धधात्र्या संवर्धितः । प्रथमप्रदोष एव स उष्णं दीर्घं च निःश्वस्याचिन्तयत् । कष्टम् । इदं दारिद्र्यं कियत्कालावधि स्यात् । इति ध्यात्वा सुप्तो निद्रामुपाययौ स स्वप्नं च दृष्टवान् । आगत्य भिक्षुत्रयेण प्रबोध्य समभिहितो यथा । भद्र । प्रभातसमये वयमनेनैव रूपेणागमिष्यामः । यत्कारणम् । तव पूर्वपुरुषैरवस्थापितास्त्रयो निधयः । त्वदभ्याहताश्च दीनारा भविष्यामः । न च त्वयात्र करुणा कर्तव्येति । एवं तं स्वप्नमनुचिन्तयन्नेव प्रभातसमये

प्रतिबुद्धो धात्रीमभिहितवान् । अद्य । अम्ब । त्वया नित्यं प्रयतया भवितव्यम् । गोमयसंमार्जनादि परिकर्म वेश्मनि कार्यम् । यथासंभवं ब्राह्मणत्रयस्य भोजनं दातव्यम् । अहमपि नापितमानयामीति । तथा चानुष्ठिते श्मश्रुनखलुञ्चनार्थं नापित आगतः । कृताचारे श्मश्रुकर्मणि स्वप्नदृष्टा उपायाताः । अथ वणिक्पुत्रस्ताञ्छ्रमणकान्दृष्ट्वा यथादिष्टमनुष्ठितवान् । धनराशयश्च ते संपन्नाः । प्रवेश्यमाने च तस्मिन्धनौघे सार्थवाहपुत्रेण दीनारशतत्रयमात्रं परितोषणाय रहस्यसंरक्षणाय च दिवाकीर्तये दत्तम् । स तु मूर्ख एवं चिन्तयामास । कुतो ऽस्याभ्यवहरणम् । कस्य वा । कुतो भिक्षार्थिनः श्रमणका गृह * * * * * * * * * * * *

तेनातीवहृतहृदया परिहृतान्यकामिजनभोगधनाशा प्रत्युत मातुः पूर्वार्जितधनमक्षपयत् । कंचित्कालं मधुपानगलितचेतना सा निजधनव्ययं नाचेतयत् । अथ मोहन्या ज्ञातस्वधनव्ययवृत्तान्तया दुःखवशात्तत्क्षणादिव जीवितं यन्न त्यक्तम्, तत्र निजशेषधनक्षपणभयमेव हेतुः । अथ सचिन्ता तां दोहनीं स्वदुहितरमुपदेष्टुमवदत् । पुत्रि, किमेतत्, यदेकमेवालिङ्ग्य यौवनं विफलीकरोषि । वेश्यानामनेकैः सह रमणक्रीडोचिता ।

निर्यात्येको विशत्यन्यः परो द्वारि प्रतीक्षते ॥ ५५ ॥

इति । अनेन यावद्यौवनम्, तावद्दिनानुदिनं धनार्जनं क्रियते । त्वां त्वदेकासक्तामन्या अनेकपुरुषसङ्गाहंकृता रहस्युपहसन्ति । ताः खलु कामिभिर्यथेष्टवितरणेन सुरततर्पणेन च वर्तमानभविष्यतोः कालयोः सफलतां कुर्वन्तितराम् । वेश्यानां धनार्जनमेव हि पुरुषार्थः । यतः ।

मदादिव महासौख्यं सुखादिव मनोभवः ।
अशनादिन्द्रियाणीव सर्वमर्थात्प्रवर्तते ॥ ५६ ॥
अर्थेभ्यो हि प्रवृद्धेभ्यः संभृतेभ्यो यतस्ततः ।
क्रियाः सर्वाः प्रवर्तन्ते केसरेभ्यो यथा मधु ॥ ५७ ॥

अतः, पुत्रि, व्यसनान्निवर्तस्वतराम् । किं च । यस्य धनदर्पः सपत्नस्पर्धा विटमेलः पितृलालित्यं त्यागित्वं भोगित्वं रागित्वं च दृश्यते, तमेव भज । अमुं निर्धनं परित्यजेति । एवं मात्रा कृतोपदेशापि सा दोहनी यदा तं नात्यजत्, तदा तमेव हन्तुमुपायांस्तन्माता कुट्टन्यचिन्तयत् । अनया मुग्धया रहितोऽयं क्षणमपि मया न लभ्यते । एषा च रागमोहिता नैव तस्यापायार्थमुपायमङ्गीकरोति । कदाचिद्रहस्योद्घाटनमेषा मुग्धा करोत्येव । ततो

राजदण्डेन न भवामि । न चाहमेकाकिनी वृद्धा चोपभुक्तभोगमेदुरमेनं प्रत्यक्षं हन्तुं समर्था । मन्त्रभेदभयाच्चात्र कर्मणि मम सहायग्रहणमनुपपन्नम् । न चैतस्य धूर्तस्य विषप्रयोगः संपद्यते । संपन्ने वा सति महाननर्थः । यतो मद्दुहिता दोहन्येतेन विना न किमपि भुङ्क्ते । न चायं तां विना । तस्मादेतयोः सुखस्वापो यदा भवति । तदैवैनमधोद्वारविषप्रयोगेण हन्तुमवसर इति निश्चयमकार्षीत् । अथ कस्मिंश्चिद्विशेषदिने स्वधनेनानीतमधुमांसादिना तयोस्तर्पणमकरोत् । ततो हि हर्षेण तर्पणोत्कर्षेण विश्रासप्रकर्षेण च सुखसुप्तयोः सतोरेकहस्तगृहीतखण्डक्षीरपात्रा । द्वितीयहस्तगूढगृहीतविषचूर्णपूर्णनाडीका शङ्कमाना कम्पमाना च शनैः पर्यङ्कनिकटमगमत् । ततो नीचैः पादतल उपविश्य शनैर्निवारितप्रावरणे नितम्बद्वारे विषपूर्णां वंशनाडीं न्यवेशयत् । ततः कुट्टन्यामाध्मानार्थमास्यं प्रसारयन्त्यामेव तस्य कामिनो ऽधोवातः सवेगं निरगमत् । तेनाधोवातवेगेन कण्ठनाडीपथनिमग्नविषा सद्य एव जीवितमजहदिति ।

अतो ऽहं ब्रवीमि । परद्रोहेण भोगाशेति । तस्मात् । &c. 104, 1.

॥ द्वितीयं परिशिष्टम् ॥

# II.

β after 107, 10 (β III. vi).

सुष्ठु चेदमभिहितम् ।

या ममोद्विजते नित्यं सा मामद्यावगूहते ।
प्रियस्वारिस्व भद्र त्वं यन्ममास्ति हरस्व तत् ॥ ८२ ॥

चौरेणाप्युक्तो ऽयम् ।

हर्तव्यं ते न पश्यामि द्रव्यं चेत्ते भविष्यति ।
पुनरप्यागमिष्यामि यदीयं त्वां न गूहते ॥ ८३ ॥

A 225ba तच्चौरस्यापि परवित्तापहर्तुरपकारिणः श्रेयश्चिन्त्यते । किं पुनः शरणागतस्याभ्युपेतस्येति । अपि च । अयं तैर्विप्रकृतो ऽस्माकम् । देव । पुष्टये । तदवसादाय भविष्यति भद्रत्वापकर्षणाय चेति । एवमवध्यो ऽयमिति ।

A 225bb अपमर्दस्तु पृष्टवान् । किमिदमवगूहनं नावगूहनमिति । कश्चायं चौरव्यतिकरः । इति कथ्यताम् । सो ऽब्रवीत् ।

अस्ति । कश्चित्सार्थवाहो ऽतीताशीतिवर्षो ऽर्थप्राधान्यात्तरुणीं भार्यामवाप्तवान् । सा तु नवयौवनसंपन्ना वृद्धसंयोगाच्चालेख्यगतेव निष्प्रयोजनं यौवनं मन्यमाना तत्समेतापि प्रतिनक्तं शयनतलगता विपरिवर्तमानाङ्गयष्टिः परं दुःखमनुभवति । अथ कदाचित्परवित्तापहारी चौरः प्रविष्टः । तं च दृष्ट्वा भयाद्विपरि-

वृत्य भर्तारं पीडितमङ्गैः परिष्वक्तवती । तथा च वर्तमाने प्रीतिप्रहर्षप्रस्यन्दितरोमाञ्चितशरीरः किमिदमत्यद्भुतमसंभाव्यं च
3 मया प्राप्तमिति मत्वा समन्तादवलोकयंश्चौरमपश्यत् । अब्रवीच्च । भद्र । या ममोद्विजते नित्यमिति । चौरो ऽपि तमाह । हर्तव्यं ते न पश्यामीति ।

6 तदप्यवधार्यापमर्दो वक्रनासं पृष्टवान् । &c. 107, 13.

## ॥ तृतीयं परिशिष्टम् ॥

## III.

β 113, 17 (β III. xi).

इमां च गुहामासन्नविनाशोपसृष्टामनागतां त्यजतां श्रेयः । उक्तं च ।

अनागतं यः कुरुते स शोचते
स शोचते यो न करोत्यनागतम् ।
जरा ममागाद्वसतः सदा बिले
बिलस्य वाङ्नैव श्रुता मया क्वचित् ॥ ९७ ॥

ते प्राहुः । कथं चैतत् । सो ऽब्रवीत् ।

अथ कस्मिंश्चिद्बिले लोपाकः प्रतिवसति स्म । स च यदा तदरण्यं विहृत्य प्रतिनिवर्तते । तदा तस्मिन्बिलद्वारे स्थित्वा बिला३ बिला३ । इति व्याहरति स्म । स एवमुक्त्वा प्रविश्य यथासुखमास्ते । गच्छति काले कदाचिदसावरण्यमाहारार्थी विनिर्गतः । तस्मिंश्च बिलद्वारे चित्रको नाम गोमायुरकस्मादेव क्षुत्क्षामकण्ठो भक्ष्यमन्विष्यमाणः प्रत्यायातः । तस्मिन्प्रदेशे लोपाकपदानि दृष्ट्वाचिन्तयत् । व्यक्तमत्र मे व्यवहारेण भवितव्यम् । इत्यवधार्य प्रविवेश । यथासावपि यथेप्सितमाहारविहारं कृत्वा

स्वमावासमुपस्थितो ऽब्रवीत् । विला३ विला३ । इति । अथ चित्रकः श्रुत्वा किमेतदित्यचिन्तयत् । अथवा नूनमयं प्रतिवचनं
3 श्रुत्वा प्रविशतीति प्रत्याह्वतवान् । अथ लोपाको ऽत्यद्भुतमश्रुत-पूर्वं तच्छ्रुत्वा प्राद्रवत् ।

अतो ऽहं ब्रवीमि । अनागतं यः कुरुत इति । एवमुक्त्वा &c. 113, 18.



॥ चतुर्थं परिशिष्टम् ॥

## IV.

β after 130, 8 (with β IV. iii).

[A 296] साधु चेदमुच्यते ।

यान्येव बुद्धिस्खलितानि नूनं
तान्येव बुद्धेः प्रतिबोधितानि ।
मनस्विनां तत्त्वविदां मनांसि
भिषग्वराणीव चिकित्सयन्ति ॥ १८ ॥

फलान्यमृतकल्पानि परे शंसन्ति यानि मे ।
न तानि मम रोचन्ते रोचते मे ह्युदुम्बरः ॥ १९ ॥

[A 297] शिशुमारो ऽब्रवीत् । कथं भवान्सत्यप्रतिज्ञां कृत्वायास्यामीति तथा प्रतिनिवृत्तः ।

अश्वमेधसहस्रं च सत्यं च तुलया धृतम् ।
अश्वमेधसहस्राद्धि सत्यमेव विशिष्यते ॥ २० ॥

[A 298] वानर आह । मूर्ख । त्वया सत्यवचनं मत्वा नाहं वञ्चयितुं शक्यः । उक्तं च ।

स्वार्थमुत्सृज्य यो मोहात्सत्यं ब्रूयान्न कालवित् ।
स कूपवाहवत्तिष्ठेद्युधिष्ठिर इवापरः ॥ २१ ॥

[A 299] कथमेतदिति पृष्टः स आह ।

कस्मिंश्चिदधिष्ठाने ऽरघट्टवाहः पुरुषः । स कदाचित्प्रमत्तः कूपे पतितः । पतमानश्च महता घटकर्परेण मुखे ऽभिहतः । ततः स रुधिरपरिप्लुतगात्रः समुद्धृतः । क्षतव्रणचिकित्सश्च जातनिर्वेदो ऽचिन्तयत् । कष्टम् । नाहमधुना पुनरीदृशीं वृत्तिमभिलषामि ।

ततः कस्यापि राज्ञः सेवां कर्तुमारब्धः । स चापि युवा दर्शनीयः शूरो मुखप्रहारालंकृत इति प्रधानं ज्ञात्वा कटकादिपरिधानभोजनादिभिरसकृत्पूजितः । कदाचित्तस्य राज्ञः शत्रुणा सह युद्धकाल उपस्थितः । तत्र सर्वराजपुरुषांस्तेन राज्ञा हिरण्यवस्त्रयानालंकारभोगैः संमानयता कथंचिदसौ कथाप्रस्तावे समभिहितः । केनायम् । भद्र । तव प्रहारः कृत इति । सो ऽब्रवीत् । देव । कर्परेणेति । राज्ञाभिहितः । व्यक्तमेतत् । कर्पराहृते कुतो ऽन्यथा प्रहारस्येदृशी स्याच्छायेति पूर्वमेव मया ज्ञातम् । तथापि कतरस्मिन्संग्रामे भूप्रदेशे वा वृत्तमेतत् । स च मूर्खः सत्यवादित्वादुक्तवान् । देव । नायं सांग्रामिकः । कूपे पतितस्य घटकर्परेणेति । यतः प्रतीहारेणार्धचन्द्रगृहीतगलो निष्कासितो राजभवनात् । उक्तश्च । गच्छ भो युधिष्ठिर सत्यसंधेति ।

A 300] अतो ऽहं ब्रवीमि । स्वार्थमुत्सृज्य यो मोहादिति । शिशुमार आह । कथं भवान्सुचरितप्रस्तावे ऽप्येवं मूढः । वानरो ऽब्रवीत् ।

न कश्चिन्नाम नयते पुमानन्यत्र भाग्यवान् ।
एषा संप्रतिपत्तिस्तु बुद्धिमद्भिर्विधीयते ॥ २२ ॥

A 301] अथ शिशुमारो वलीवदनकं प्रज्ञाकौशलविनिश्चितमना एवमाह ।

मौर्ख्यं प्रख्यापयन्ति स्वं परं प्राज्ञं वदन्ति तु ।
धीराः स्वेषु तु कार्येषु भवन्त्यस्खलितोद्यताः ॥ २३ ॥

अपि च ।

नयप्रच्छादितेच्छानां प्रज्ञया मित्रवादिनाम् ।
विदुषामपि निष्पेषाः कार्यसिद्धिप्रकाशकाः ॥ २४ ॥

A 302] इत्युक्त्वा निहताशः स्वमालयमगात् ।

॥ इति तन्त्राख्यायिकायां लब्धनाशं नाम चतुर्थं तन्त्रम् ॥

# HARVARD ORIENTAL SERIES

**Harvard Oriental Series.** Edited, with the coöperation of various scholars, by CHARLES ROCKWELL LANMAN, A.B. and LL.D. (Yale), LL.D. (Aberdeen), Wales Professor of Sanskrit at Harvard University; Honorary Member of the Asiatic Society of Bengal, the Société Asiatique, the Royal Asiatic Society of Great Britain and Ireland, and the Deutsche Morgenländische Gesellschaft; Member of the American Philosophical Society; Fellow of the American Academy of Arts and Sciences; Foreign Member of the Royal Bohemian Society of Sciences; Honorary Correspondent of the Archæological Department of the Government of India; Corresponding Member of the Institute of Bologna, of the Royal Society of Sciences at Göttingen, of the Imperial Russian Academy of Sciences, and of the Institute of France (Académie des Inscriptions et Belles-Lettres).

**Published by the Harvard University Press, Cambridge, Massachusetts, U.S.A.** To be bought, in America, of GINN & COMPANY, 29 Beacon Street, Boston, Mass.; in England, of GINN & Co., 9 St. Martin's Street, Leicester Square, London, W.C.; in Continental Europe, of O. Harrassowitz, Leipzig.—The price of volume 3 is $1.20. Price of volumes 7 and 8 (not sold separately) is $5. Price of volume 10 is $6. The price of each of the other volumes is $1.50. Volumes 18 and 19 are not sold separately.—One dollar ($1.00)=Marks 4.18=francs or lire 5.15=4 shillings and 2 pence=3 rupees.—Volume 10 is royal 4° (32 cm.); volumes 7 and 8 are super-royal 8° (28 cm.); the rest are royal 8° (26 cm.). All are now bound durably in full buckram with gilt top.

**Volume 1. Jātaka-Mālā,** Stories of Buddha's former incarnations, by Ārya Çūra. Edited in Sanskrit (Nāgarī letters) by Professor H. KERN, University of Leiden, Netherlands. 1891. Second issue, 1914. Pages, 270. (Translation by Speyer, London, 1895, Frowde.)

**Volume 2. Sānkhya-Pravachana-Bhāshya,** or Commentary on the exposition of the Sānkhya philosophy, by Vijñāna-Bhikshu. Edited in Sanskrit (Roman letters) by Professor R. GARBE, University of Tübingen, Germany. 1895. Pages, 210. (Translated by Garbe, Leipzig, 1889, Brockhaus.)

**Volume 3. Buddhism in Translations.** Passages selected from the Buddhist sacred books and translated from the original Pāli into English by HENRY CLARKE WARREN, late of Cambridge, Massachusetts. 1896. Sixth issue, 1915. Pages, 540. (Over 100 extracts from the sacred books of Buddhism, so arranged as to give a connected account of the legendary life of Buddha, of his monastic order, of his doctrines on karma and rebirth, and of his scheme of salvation. The work has been widely circulated and has been highly praised by competent authorities.)

**Volume 4. Karpūra-Mañjarī.** A drama by the Indian poet Rājaçekhara (900 A.D.). Critically edited in the original Prākrit (Nāgarī letters), with a glossarial index and an essay on the life and writings of the poet, by STEN KONOW, of the University of Christiania, Norway; and translated into English with notes by C. R. LANMAN. 1901. Pages, 318.

**Volumes 5 and 6. Brihad-Devatā** (attributed to Çāunaka), a summary of the deities and myths of the Rig-Veda. Critically edited in the original Sanskrit (Nāgarī letters), with an introduction and seven appendices (volume 5), and translated into English with critical and illustrative notes (volume 6), by Professor A. A. MACDONELL, University of Oxford. 1904. Pages, 234+350=584.

**Volumes 7 and 8. Atharva-Veda.** Translated, with a critical and exegetical commentary, by the late Professor W. D. WHITNEY, of Yale University; revised and brought nearer to completion and edited by C. R. LANMAN. 1905. Pages, 1212. (The work includes critical notes on the text, with various readings of European and Hindu mss.; readings of the Kashmirian version; notices of corresponding passages in the other Vedas, with report of variants; data of the scholiasts as to authorship and divinity and meter of each verse; extracts from the ancillary literature concerning ritual and exegesis; literal translation; elaborate critical and historical introduction.)

**Volume 9. The Little Clay Cart** (Mṛcchakaṭika), a Hindu drama attributed to King Shūdraka. Translated from the original Sanskrit and Prākrits into English prose and verse by A. W. RYDER, Instructor in Sanskrit in Harvard University. 1905. Pages, 207.

**Volume 10. Vedic Concordance**: being an alphabetic index to every line of every stanza of the published Vedic literature and to the liturgical formulas thereof, that is, an index (in Roman letters) to the Vedic mantras, together with an account of their variations in the different Vedic books. By Professor MAURICE BLOOMFIELD, of the Johns Hopkins University, Baltimore. 1906. Pages, 1102.

**Volume 11. The Pañchatantra**: a collection of ancient Hindu tales, in the recension (called Pañchākhyānaka, and dated 1199 A.D.) of the Jaina monk, Pūrṇabhadra, critically edited in the original Sanskrit (in Nāgarī letters; and, for the sake of beginners, with word-division) by Dr. JOHANNES HERTEL, Professor am königlichen Realgymnasium, Doebeln, Saxony. 1908. Pages, 344.

**Volume 12. The Pañchatantra-text of Pūrṇabhadra**: critical introduction and list of variants. By Professor HERTEL. 1912. Pages, 245. (Includes an index of stanzas.)

**Volume 13. The Pañchatantra-text of Pūrṇabhadra,** and its relation to texts of allied recensions as shown in **Parallel Specimens.** By Professor HERTEL. 1912. (Nineteen sheets, mounted on guards and issued in atlas-form. They give, in parallel columns, four typical specimens of the text of Pūrṇabhadra's Pañchatantra, in order to show the genetic relations in which the Sanskrit recensions of the Pañchatantra stand to one another, and the value of the manuscripts of the single recensions.)

**Volume 14. The Pañchatantra**: a collection of ancient Hindu tales, in its oldest recension, the Kashmirian, entitled **Tantrākhyāyika.** Sanskrit text, reprinted from the critical editio major by Professor HERTEL. Editio minor. 1915. Pages, 160.

**Volume 15. Bhāravi's poem Kirātārjunīya or Arjuna's combat with the Kirāta.** Translated from the original Sanskrit into German and explained by CARL CAPPELLER, Professor at the University of Jena. 1912. Pages, 231. (Introduction, notes, and various other useful additions.)

**Volume 16. The Çakuntalā, a Hindu drama by Kālidāsa**: the Bengālī recension critically edited in the original Sanskrit and Prākrits by RICHARD PISCHEL, late Professor of Sanskrit at the University of Berlin. (Nearly ready.)

**Volume 17. The Yoga-system of Patañjali,** or the ancient Hindu doctrine of concentration of mind: embracing the Mnemonic rules (Yoga-sūtras) of Patañjali, the Comment (Bhāshya) attributed to Vyāsa, and the Explanation (Tattva-vāiçāradī) of Vāchaspati-Miçra: translated from the original Sanskrit by JAMES HAUGHTON WOODS, Professor of Philosophy at Harvard University. 1914. Pages, 422.

**Volumes 18 and 19. The Veda of the Black Yajus School, entitled Tāittirīya Sañhitā.** Translated from the original Sanskrit prose and verse, with a running commentary. By ARTHUR BERRIEDALE KEITH, D.C.L. (Oxford), of the Inner Temple, Barrister-at-law, and of His Majesty's Colonial Office, sometime Acting Professor of Sanskrit at the University of Oxford, Author of 'Responsible Government in the Dominions'. Volume 18, kāṇḍas I–III; volume 19, kāṇḍas IV–VII. 1914. Pages, 464+374=838. Not sold separately.

**Volume 20. Rig-Veda Repetitions.** A statistical and critical and historical account of the repeated verses and distichs and stanzas of the Rig-Veda. By MAURICE BLOOMFIELD. (Nearly ready.)

**Volumes 21 and 22 and 23. Rāma's Later History,** or **Uttara-Rāma-Charita,** an ancient Hindu drama by Bhavabhūti. Critically edited in the original Sanskrit and Prākrit, with an introduction and English translation and notes and variants, &c. By SHRIPAD KRISHNA BELVALKAR, Graduate Student of Harvard University, Assistant to the Professor of Sanskrit at Deccan College, Poona, India. Volume 21, Introduction and Translation. 1915. Pages, 190. Volume 22, Text; Indexes of Stanzas, Metres, &c.; Prākrit Glossary. (Nearly ready.)—Volume 23, English notes and Variant readings; Appendixes. (The material for Volume 23 is now, in 1915, upon a steamship interned at a port of the Balearic Islands.)